वो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥ १ ॥
तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति ॥ २ ॥

---

चित्तत्वाद्दषावनादराद्वा वाशब्दः स्वाध्यायार्थः । स्वाध्यायं कर्तुं ग्रामाद्बहिरुद्वव्राजोद्गतवान्विविक्तदेशस्थोदकाभ्याशम् । उद्वव्राज प्रतिपालयांचकारेति चैकवचनाल्लिङ्गादेकोऽसावृषिः । श्वोद्गीथकालप्रतिपालनादृषेः स्वाध्यायकरणमन्नकामनयेति लक्ष्यत इत्यभिप्रायतः ॥ १ ॥

स्वाध्यायेन तोषिता देवतर्षिर्वा श्वरूपं गृहीत्वा श्वा श्वेतः संस्तस्मा ऋषये तदनुग्रहार्थं प्रादुर्बभूव प्रादुश्चकार । तमन्ये शुक्लं श्वानं क्षुल्लकाः श्वान उपसमेत्योचुरुक्तवन्तोऽन्नं नोऽस्मभ्यं भगवानागायत्वागानेन निष्पादयत्वित्यर्थः । मुख्यप्राणं वागादयो वा प्राणमन्वन्नभुजः स्वाध्यायपरितोषिताः सन्तोऽनुगृह्णीयुरेनं श्वरूपमादायेति युक्तमेवं प्रतिपत्तुम् । अशनायामँ वै बुभुक्षिताः स्मो वा इति ॥ २ ॥

---

यमृषिद्वयं वा विवक्षितमित्यर्थः । पक्षान्तरद्योतनार्थो वाशब्दः । श्रौतो वाशब्दस्तर्हि किमर्थमित्याशङ्क्य पाठादन्यत्र तस्य फलमित्याह । वाशब्द इति । मैत्रेयान्तं वाक्यं व्याख्याय स्वाध्यायामित्यादि व्याचष्टे । स्वाध्यायमिति । यदुक्तमृषिरेको बकादिशब्दैरुच्यत इति तत्र लिङ्गमाह । उद्वव्राजेति । शुनामुद्गीथः श्वोद्गीथस्तत्कालस्य प्रतिपालनं प्रतीक्षणमृषेर्दृश्यते तेषां चोद्गानमन्नार्थं तदृषेरपि स्वाध्यायकरणं तदर्थमित्याह । श्वोद्गीथेति । यथोक्तार्थवाचिशब्दाभावेऽपि सामर्थ्यादयमर्थो भातीत्याह । अभिप्रायेत इति ॥ १ ॥

तस्मा इत्यादि व्याचष्टे । स्वाध्यायेनेति । क्षुल्लकाः क्षुद्रकाः शिशव इति यावत् । श्वेतः श्वा कश्चिदृषिर्देवता वा । अन्ये च श्वानो देवता ऋषयो वेत्युक्तम् । संप्रति विवक्षितं पक्षमाह । मुख्येति । तमूचुरिति संबन्धः । तानेव विशिनष्टि । प्राणमन्विति । मुख्यप्राणसहितवागादिग्रहे हेतुमाह । स्वाध्यायेति । अन्यथा वाक्यमनिर्धारितार्थं स्यादिति भावः । किमित्यन्नं भवद्भ्यो मया संपाद्यते न हि भवतामभोक्तॄणां तेन कृत्यमस्तीत्याशङ्क्य त्वन्निष्ठचेतनद्वारेणास्माकमपि भोगसिद्धेर्भवमित्याह । अशनायाम वा इत्यादिना ॥ २ ॥

---

१ ख. ग. घ. च. ञ. ट. ड. °यार्थं । स्वा° । २ क. ठ. ठ. °भ्यासम् । ३ ख. ङ. ञ. ढ. ट. °क्ष्यतेऽभि° । ४ ख. घ. ङ. ञ. ठ. ड. °प्रायोऽतः । °प्रायोऽन्तःस्वा° । ५ क. °काः क्षुद्रकाः श्वा° । ६ ख. ग. घ. ङ. ञ. ट. ठ. ढ. मुख्यं प्रा° । ७ घ. ङ. च. ट. ड. ढ. °म पु° । ८ क. ग. ट. °यान्तवा° । ९ ख. घ. ङ. ञ. ढ. °ध्यायार्थेमि° । १० क. °र्थो भवती° । ११ ख. छ. ञ. °य इ° । १२ क. °रितं स्वा° ।

तान्होवाचेहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रयः प्रतिपालयांचकार ॥ ३ ॥ ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः सꣳरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिंचक्रुः ॥ ४ ॥

ओ३म्दा३मों३ पिबा३मों३ देवो वरुणः प्रजापतिः सविता२ऽन्नमिहा२ऽऽहरदन्नपते३ऽन्न-

एवमुक्ते श्वा श्वेतं उवाच तान्क्षुल्लकाञ्शुन इहैवास्मिन्नेव देशे मा मां प्रातः प्रातःकाल उपसमीयातेति। दैर्घ्यं छान्दसं समीयातेति प्रमादपाठो वा। प्रातःकालकरणं तत्काल एव कर्तव्यार्थम्। अन्नदस्य वा सवितुरपराह्णेऽनाभिमुख्यात्। तत्तत्रैव ह बको दाल्भ्यो ग्लावो वा मैत्रेय ऋषिः प्रतिपालयांचकार प्रतीक्षणं कृतवानित्यर्थः ॥ ३ ॥

ते श्वानस्तत्रैवाऽऽगम्य ऋषेः समक्षं यथैवेह कर्मणि बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणा उद्गातृपुरुषाः संरब्धाः संलग्ना अन्योन्यमेवं मुखेनान्योन्यस्य पुच्छं गृहीत्वाऽऽससृपुराससृपवन्तः परिभ्रमणं कृतवन्त इत्यर्थः। त एवं संसृप्य समुपविश्योपविष्टाः सन्तो हिंचक्रुर्हिंकारं कृतवन्तः ॥ ४ ॥

ओमदामों पिबामों देवो द्योतनात्। वरुणो वर्षणाज्जगतः। प्रजापतिः पालनात्प्रजानाम्। सविता प्रसवितृत्वात्सर्वस्याऽऽदित्य उच्यते। एतैः पर्यायैः स एवंभूत आदित्योऽन्नमस्मभ्यमिहाऽऽहरदाहरत्विति। त एवं हिं कृत्वा पुनरप्यूचुः। स त्वं हेऽन्नपते। स हि सर्वस्यान्नस्य प्रस-

किमिति प्रातःकालप्रतीक्षणं कृतं तत्राऽऽह। प्रातरिति। उद्गानस्येति शेषः। प्रातःकालप्रतीक्षणकरणे कारणान्तरमाह। अन्नदस्येति। तस्य वृष्टिद्वाराऽन्नदत्वं द्रष्टव्यम्। तद्धेत्यादि व्याचष्टे। तत्तत्रेति। ऋषेरन्नकामत्वमितोऽवगतम् ॥ ३ ॥

ते हेत्यादि व्याकरोति। ते श्वान इति। समक्षमाससृपुरिति संबन्धः। उद्गातृपुरुषा इत्यध्वर्युप्रमुखा यजमानपर्यन्ता गृह्यन्ते। अन्योन्यं संलग्नाः सर्पन्तीति शेषः ॥४॥

हिंकारस्वरूपमाह। ओमित्यादिना। त्रिवारमोंकारो गानार्थमुच्चारितः। अदामा-

१ क. ग. घ. च. ट. °मुक्तवन्तः। स श्वा°। ङ. °मुक्तवन्तः। श्वा°। ड. °मुक्तवतः श्वा°। २ क. ख. ग. घ. ङ. ञ. ट. ठ. ड. ढ. °तस्तान्क्षु°। ३ ट. °वानुवाच शुन। ४ क. च. °गत्य ऋ°। ५ क. ख. ग. घ. च. ञ. ट. ठ. °व सर्पन्ति। एवं मु°। ६ ग. घ. ठ. °च्छं पु°। ७ ङ. च. ढ. वरणा° ८ ठ. ड. सर्वान्न°। ९ क. °मुच्चारि°।

मिहा२ऽऽहरा२ऽऽहरो३मिति ॥ ५ ॥
इति प्रथमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥
अयं वाव लोको हाउकारो वायुर्हाइकारश्च-

वितृत्वात्पतिः । न हि तत्पाकेन विना प्रसूतमन्नमणुमात्रमपि जायते प्राणिनाम् । अतोऽन्नपतिः । हेऽन्नपतेऽन्नमस्मभ्यमिहाऽऽहराऽऽहरेति । अभ्यास आदरार्थः । ओमिति ॥ ५ ॥ इति प्रथमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

भक्तिविषयोपासनं सामावयवसंबद्धमित्यतः सामावयवान्तरस्तोभाक्षरविषयाण्युपासनान्तराणि संहतान्युपदिश्यन्तेऽनन्तरं सामावयवसंबद्धत्वाविशेषात् । अयं वावायमेव लोको हाउकारः स्तोभो रथंतरे साम्नि प्रसिद्धः । इयं वै रथंतरमिति । अस्मात्संबन्धसामान्याद्धाउकारस्तोभोऽयं लोक इत्येवमुपासीत । वायुर्हाइकारः । वामदेव्ये सामनि हाइकारः प्रसिद्धः । वाय्वप्संबन्धश्च वामदेव्यस्य साम्नो योनिरिति । अस्मात्सामान्याद्धाइकारं वायुदृष्ट्योपासीत । चन्द्रमा अथकारः । चन्द्रदृष्ट्याऽ-

ऽन्नं करवाम । पिबाम पानं करवामेत्येतत् । इति शब्दो हिंकारसमाप्त्यर्थः । अन्नप्रसवितृत्वमादित्यस्य साधयति । न हीति । इहेति प्रकृतदेशोक्तिः । ओंकारः सवितृप्रार्थनामन्त्रसमाप्त्यर्थः । भक्तिविषयोपास्तिसमाप्त्यर्थमिति पदम् ॥ ५ ॥ इति प्रथमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

ननु भक्तिसंबन्धानामुपासनानां नीतत्वात्समस्तस्येत्यादिवक्तव्ये किमनन्तरखण्डेनेत्याशङ्क्याऽऽह । भक्तीति । इत्यतोऽस्मात्प्रसङ्गादिति यावत् । ऋगक्षराणि गीयन्ते तद्व्यतिरिक्तानि वाच्यशून्यानि गीतिसिद्ध्यर्थानि स्तोभाक्षराणि परिभाष्यन्ते तानि च कर्मापूर्वनिर्वृत्तिद्वारेण फलवत्त्वादुपास्यानि तदुपास्तिविधिपरमुत्तरं वाक्यमित्यर्थः । वक्ष्यमाणोपासनानां प्रत्येकं स्वातन्त्र्यं नास्तीत्याह । संहतानीति । तेषामनन्तरमुपदेशे हेतुमाह । सामावयवेति । न चैवंविधस्तोभो नास्तीति वाच्यमित्याह । रथंतर इति । तथाऽपि कथं पृथिवीदृष्ट्या यथोक्तस्तोभस्योपास्यत्वं तत्राह । इयमिति । इयं वै रथंतरमित्यत्र पृथिव्या रथंतरत्वं श्रुतं प्रस्तुतश्च स्तोभो रथंतरेऽस्तीत्युक्तं तथा च यथोक्तात्संबन्धरूपात्सादृश्यात्पृथिवीदृष्ट्या हाउकार उपास्य इत्यर्थः । कथं पुनर्वायुदृष्ट्या हाइकारस्योपास्यत्वं तत्राऽऽह । वाय्वप्संबन्धश्चेति । हाइकारो वामदेव्ये साम्नि प्रसिद्धः । तस्य च वायोरपां च संबन्धो योनिर्मैथुनेच्छावतीनामपां वायुः पृष्ठेऽ-

१ ख. ञ. ठ. °हायिका° । २ घ. ङ. ड. °रार्थमोमि° । ३ क. ट. °बन्धमि° । ४ घ. ङ. ट. °ब-न्धत्वा° । ५ ख. ङ. ञ. °हायिका° ६ ख. ङ. ञ. ड. ट. °हायिका° । ७ ङ. °स्मात्संबन्धाद्धा° । ८ क. छ. ञ. °प्त्यर्थं चेति । ९ क. °नां ज्ञात° । ग. ट. °नां गात° । १० क. तत्राऽऽह । ११ ख. ञ. हायिका° । १२ ख. ग. ञ. °हायिका° ।

न्द्रमा अथकारः । आत्मेहकारोऽग्निरीकारः॥१॥
आदित्य ऊकारो निहव एकारो विश्वे देवा औ-
होयिकारः प्रजापतिर्हिंकारः प्राणः स्वरोऽन्नं या

थकारमुपासीत । अन्ने हीदं[2] स्थितम् । अनात्मा[3] चन्द्रः । थकाराकार-सामान्याच्च । आत्मेहकारः । इहेति स्तोभः[4] प्रत्यक्षो ह्यात्मेहेति व्यपदिश्यते । इहेति च स्तोभः । तत्सामान्यात् । अग्निरीकारः । ईनिधनानि[5] चाऽऽग्नेयानि सर्वाणि सामानीत्यतस्तत्सामान्यात् ॥ १ ॥

आदित्य ऊकारः । ऊच्चैरूर्ध्वं सन्तमादित्यं गायन्त्यूकारश्चायं[6] स्तोभः । आदित्यदैवत्ये[7] साम्नि स्तोभे[8] ऊ इत्यादित्य ऊकारः । निहव इत्याह्वानमेकारः स्तोभः । एहीति[9] चाऽऽह्वयन्तीति तत्सामान्यात् । विश्वे देवा औहोयिकारो[10] वैश्वदेव्ये साम्नि स्तोभस्य दर्शनात् । प्रजापतिर्हिंकारः । आनिरुक्त्याद्धिंकारस्य चाव्यक्तत्वात् । प्राणः स्वरः । स्वर इति स्तो-

त्यवर्तत ततो वामदेव्यं सामाभवत्[11] इति श्रुतेः । तस्माद्यथोक्ताद्वामदेव्यसामसंबन्धसामान्याद्वायुदृष्ट्या हौइकारम्[12]उपासीतेत्यर्थः । कथमथकारस्य चन्द्रदृष्ट्योपासनं तत्राऽऽह । अन्ने हीति । तथा च थकारसामान्याद्यथोक्तोपास्तिसिद्धिरिति शेषः । थकारवदकारसामान्याच्च चन्द्रदृष्ट्याऽथकारमुपासीतेत्याह । थकारेति । अथकारे तावद्व्यक्तोऽकारोऽन्नात्मनि चन्द्रमस्यपि सोऽस्तीति[13] तद्युक्तं यथोक्तमुपासनमित्यर्थः । प्रथमप्रत्यक्षः पश्चात्प्रत्यक्षीभवन्निति शेषः । तत्सामान्यमिहेति व्यपदिश्यमानत्वं तस्मादात्मदृष्टिरिहेति स्तोभे कर्तव्येत्याह । तत्सामान्यादिति । अग्निदृष्टिरीकाराख्ये स्तोभाक्षरे कर्तव्येत्यत्र हेतुमाह । ईनिधनानीति । ईकारो निधीयते येषु सामसु तान्याग्नेयानि प्रसिद्धानि । तथा च तेष्वग्निरीकारश्चेत्युभयोर्भावादस्मात्सादृश्यादीकारमग्निदृष्ट्योपासीतेत्यर्थः ॥ १ ॥

ऊकारमादित्यदृष्ट्या कथमुपासीतेत्याशङ्क्याऽऽह । उच्चैरिति । ऊकारादित्ययोर्विधान्तरेण सादृश्यमाह । आदित्येति । एकारसामान्यान्निहवदृष्टिरेकारे स्तोभे कार्येत्याह । निहव इत्यादिना । औहोयिकारस्य[14] विश्वेदेवदृष्ट्योपास्तौ हेतुमाह । वैश्वदेव्य इति । प्रजापतिदृष्ट्या हिंकारोपास्यत्वे हेतुः । आनिरुक्त्यादिति । नीलपीतादिरूपेण निरुक्त्यविषयत्वात्प्रजापतेरित्यर्थः । अव्यक्तत्वाद्रूपादिरहितत्वादित्यर्थः । प्राणस्य चेति चकारात्स्वरस्य चेत्यर्थः । स्वरहेतुत्वं तन्निर्वर्तकत्वेन पदा-

१ क. ग. ज. झ. ट. °हौइका°। २ ठ. °दं सर्वं स्थि°। ३ ख. घ. ङ. च. ञ. ठ. °त्मा च च°। ४ च. ङ. ड. स्तोभोऽप्र°। ५ ख. ञ. °नि धनानि चा°। ६ क. °यन्तीत्यूका°। ७ ख. ञ. °त्ये वा सा°। ८ क. ग. च. ट. ठ. °भ इ°। ९ ठ. °ति त्वाऽऽह्व°। १० क. ग. घ. ट. ठ. ड. °हौइका°। ११ ख. ञ. °माक्षरव°। १२ ख. ग. ञ. हाविका°। १३ ख. ग. छ. ट. सोऽस्ति त°। १४ क. ट. °हौइका°।

वाग्विराट् ॥ २ ॥ अनिरुक्तस्त्रयोदशः स्तोभः संचरो हुंकारः॥३॥दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद ॥ ४॥ इति प्रथमाध्यायस्य त्रयोदशः खण्डः ॥१३॥ इति च्छान्दोग्योपनिषद्ब्राह्मणे प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

भः । प्राणस्य च स्वरहेतुत्वसामान्यात् । अन्नं या । या इति स्तोभोऽन्नम् । अन्नेन हीदं यातीत्यतस्तत्सामान्यात् । वा गिति स्तोभो विराडन्नं देवताविशेषो वा । वैराजे साम्नि स्तोभदर्शनात् ॥ २ ॥

अनिरुक्तोऽव्यक्तत्वादिदं चेदं चेति निर्वक्तुं न शक्यत इत्यतः संचरो विकल्प्यमानस्वरूप इत्यर्थः । कोऽसावित्याह । त्रयोदशः स्तोभो हुंकारः । अव्यक्तो ह्ययमतोऽनिरुक्तविशेष एवोपास्य इत्यभिप्रायः ॥३॥

स्तोभाक्षरोपासनाफलमाह । दुग्धेऽस्मै वाग्दोहमित्याद्युक्तार्थम् । य एतामेवं यथोक्तलक्षणां साम्नां सामावयवस्तोभाक्षरविषयामुपनिषदं दर्शनं वेद तस्यैतद्यथोक्तं फलमित्यर्थः । द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः । सामावयवविषयोपासनोविशेषपरिसमाप्त्यर्थो वेति ॥ ४ ॥ इति प्रथमाध्यायस्य त्रयोदशः खण्डः ॥१३ ॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादकृतौ छान्दोग्योपनिषद्विवरणे प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

त्मकत्वम् । अन्नं याइति वाक्यं व्याचष्टे । या इतीति । अन्नदृष्टिर्या इति स्तोभे कर्तव्येत्यत्र हेतुमाह । अन्नेनेति । विराड्दृष्टिर्वागिति स्तोभे कार्येत्यत्र हेतुमाह । वैराज इति ॥ २ ॥

अनिरुक्तः कारणात्मा । तस्यानिरुक्तत्वं साधयति । अव्यक्तत्वादिति । स चानेकधा कार्यरूपेण संचरतीति संचरः । हुंकारोऽपि शाखाभेदेन विकल्प्यमानस्वरूपस्त्रयोदशश्चायं वावेत्यारभ्य गण्यमानस्ततश्च कारणदृष्ट्या हुंकारमुपासीतेत्यर्थः । उक्तमेवोपपादयति । अव्यक्तो हीति । तत्र विकल्प्यमानत्वं हेतुः ॥ ३ ॥

नैतानि व्यस्तान्युपासनानि प्रत्येकं फलाश्रवणात् । समस्तं पुनरेकमिदमुपासनमेकफलत्वादित्यभिप्रेत्याऽऽह । स्तोभाक्षरेति । उपनिषदं वेदोपनिषदं वेदेत्यावृत्तेस्तात्पर्यमाह । द्विरभ्यास इति । प्रथमप्रपाठकव्याख्यानसमाप्तावितिशब्दः ॥४॥ इति प्रथमाध्यायस्य त्रयोदशः खण्डः ॥१३॥ इति श्रीमत्परमहंसपरिव्राजकशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

१ क. ट. वेदेति ॥ ४ ॥ २ घ. ङ. ठ. ड. ढ. °स्य स्व°। ३ ख. घ. ङ. °दं वेदं वेति । ग. ञ. ठ. °दं वेदं । ४ क. घ. ङ. ठ. °कल्पमा°। ५ क. ग. ङ. ट. ठ. ड. ढ. °ह हुं°। ६ ग. घ. ङ. च. ट. ठ. ड. °नाशे°। ७ क. °प्त्यर्थ इति शब्दः ॥ ४ ॥ ८ क. °कल्पमा°।

**ॐ समस्तस्य खलु साम्न उपासन साधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥ १ ॥**

**तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपा-**

ओमित्येतदक्षरमित्यादिना सामावयवविषयमुपासनमनेकफलमुपदिष्टम्। अनन्तरं च स्तोभाक्षरविषयमुपासनमुक्तम्। सर्वथाऽपि सामैकदेशसंबद्धमेव तदिति। अथेदानीं समस्ते साम्नि समस्तसामविषयाण्युपासनानि वक्ष्यामीत्यारभते श्रुतिः। युक्तं ह्येकदेशोपासनानन्तरमेकदेशिविषयमुपासनमुच्यत इति। समस्तस्य सर्वावयवविशिष्टस्य पाञ्चभक्तिकस्य साप्तभक्तिकस्य चेत्यर्थः। खल्विति वाक्यालंकारार्थः। साम्न उपासनं साधु। समस्ते साम्नि साधुदृष्टिविधिपरत्वान्न पूर्वोपासननिन्दार्थत्वं साधुशब्दस्य। ननु पूर्वत्राविद्यमानं साधुत्वं समस्ते साम्न्यभिधीयते। न। साधु सामेत्युपास्त इत्युपसंहारात्। साधुशब्दः शोभनवाची। कथमवगम्यत इत्याह। यत्खलु लोके साधु शोभनमनवद्यं प्रसिद्धं तत्सामेत्याचक्षते कुशलाः। यदसाधु विपरीतं तदसामेति ॥ १ ॥

तत्त्रैवं साध्वसाधुविवेककरण उताप्याहुः। साम्नैनं राजानं सामन्तं चोपागादुपगतवान्। कोऽसौ। यतोऽसाधुत्वमाप्याशङ्का स इत्यभिप्रायः। शोभनाभिप्रायेण साधुनैनमुपागादित्येवं तत्त्राऽऽहुर्लौकिका

ॐ पूर्वोत्तरप्रपाठकयोः संगतिं दर्शयति। ओमित्येतदित्यादिना। सर्वथाऽपि सामावयवविषयत्वे स्तोभाक्षरविषयत्वे चेत्यर्थः। इति शब्दो हेत्वर्थः। यस्मादेकदेशविषयाण्युपासनानि वृत्तानि तस्मात्तानि समस्तविषयाणि वक्तव्यानीत्यर्थः। एकदेशोपास्तिव्याख्यानान्तर्यमथशब्दार्थः। कथमुक्तवक्ष्यमाणोपासनयोरिदं पौर्वापर्यं तत्राऽऽह। युक्तं हीति। समस्तस्योपासनं साध्विति वचनादवयवोपासनं निन्दितत्वादननुष्ठेयमित्याशङ्क्याऽऽह। समस्त इति। अर्थादस्ति निन्देति शङ्कते। नन्विति। पूर्वत्रापि साधुत्वस्य विद्यमानस्यैव विशेषणत्वेनानुपादानान्नार्थादपि निन्देति परिहरति। नेति। यत्खल्वित्यादि व्याख्यातुं पातनिकामाह। साधुशब्द इति। वाक्यमवतार्य व्याचष्टे। कथमित्यादिना ॥ १ ॥

किं पुनरेवं विवेककरणे कारणमित्याशङ्क्याऽऽह। तत्त्रेति। विवेककरणोपायभेदविकल्पार्थमुतेत्युभयत्र पदम्। साम्नैनमित्यादिना साधुनेत्यादिवाक्यस्य पौनरुक्त्यमाशङ्क्य व्याख्यानव्याख्येयभावान्मैवमित्याह। शोभनेति। शोभनकार्यदर्शने स-

१ ख. घ. ञ. ठ. ड. ढ. °दि सा°। २ ख. घ. ञ. ठ. ड. ढ. °बन्धमे°। ३ ग. ट. °रमनेकदेशवि°। ४ ख. घ. ङ. च. ञ. °र्वोक्तोपा°। ५ घ. ठ. °त्रैवं सा°। ६ ङ. ञ. ड. ड. °न्तं चोपा°। ७ ख. ङ. ड. ढ. °त्येवं त°। ८ ख. ञ. °त्राहु°। ९ ग. ट. °समस्य नि।

गादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥

अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥

स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥

इति द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

बन्धनाद्यसाधुकार्यमपश्यन्तः। यत्र पुनर्विपर्ययो बन्धनाद्यसाधुकार्यं पश्यन्ति तत्रासाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥

अथोताप्याहुः स्वसंवेद्यं साम नोऽस्माकं बतेत्यनुकम्पयन्तः संवृत्तमित्याहुः। एतत्तैरुक्तं भवति यत्साधु भवति साधु बतेत्येव तदाहुः। विपर्यये जातेऽसाम नो बतेति। यदसाधु भवत्यसाधु बतेत्येव तदाहुः। तस्मात्सामसाधुशब्दयोरेकार्थत्वं सिद्धम् ॥ ३ ॥

अतः स यः कश्चित्साधु सामेति साधुगुणवत्सामेत्युपास्ते समस्तं साम साधुगुणवद्विद्वांस्तस्यैतत्फलमभ्याशो ह क्षिप्रं ह यदिति क्रियाविशेषणार्थमेनमुपासकं साधवः शोभना धर्माः श्रुतिस्मृत्यविरुद्धा आ च गच्छेयुरागच्छेयुश्च न केवलमागच्छेयुरुप च नमेयुरुपनमेयुश्च भोग्यत्वेनोपतिष्ठेयुरित्यर्थः ॥ ४ ॥ इति द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

तीति यावत्। तत्रैव हेत्वन्तरमाह। बन्धनादीति। असाम्नेत्यादि व्याचष्टे। यत्रेति ॥२॥

कार्यगम्यं साधुत्वमसाधुत्वं चोक्त्वा स्वानुभवगम्यं तदुपन्यस्यति। अथेति। कार्योत्तस्य साधुत्वादिविवेकानन्तर्यमथशब्दार्थः। स्वसंवेद्यं साधुत्वमसाधुत्वं चेति शेषः। तत्र साधुत्वं स्वानुभवसिद्धमित्येतद्व्युत्पादयति। सामेति। यत्साध्वित्यादिवाक्यस्य पूर्वेण पौनरुक्त्यमाशङ्क्याऽऽह। एतदिति। असामेत्यादि व्याचष्टे। विपर्यय इति। बतेत्याहुरिति संबन्धः। किंतैरुक्तं भवति तदाह। यदसाध्विति। साधुशब्दः शोभनवाचीत्युक्तमुपसंहरति। तस्मादिति ॥ ३ ॥

तयोरेकार्थत्वमतः शब्दार्थः। उपासकमेव विशिनष्टि। समस्तमिति। आगच्छेयुरिति यत्तत्क्षिप्रमेवेति क्रियाविशेषणत्वं यदित्यस्य द्रष्टव्यम् ॥ ४ ॥ इति द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

१ क. °र्यये ब°। च. ठ. °र्ययेण ब°। २ ख. ङ. ञ. ढ. ढ. °तापि चाहुः। ३ ग. घ. ङ. च. ट. ठ. ड. ढ. °यन्तः सं°। ४ च. ढ. °भ्याशः क्षि°। ५ क. ग. ट. ठ. °प्रं य°। ६ क. ङ. ड. ढ. °मनध°। ७ ख. ञ. °युश्चाऽऽगच्छेयुर्न। ८ ख. ग. घ. च. ञ. ट. ड. °युश्च।

**लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिं-**

कानि पुनस्तानि साधुदृष्टिविशिष्टानि समस्तानि सामान्युपास्यानीति। इमानि तान्युच्यन्ते लोकेषु पञ्चविधमित्यादीनि। ननु लोकादिदृष्ट्या तान्युपास्यानि साधुदृष्ट्या चेति विरुद्धम्। न। साध्वर्थस्य लोकादिकार्येषु कारणस्यानुगतत्वात्। मृदादिवद्घटादिविकारेषु। साधुशब्दवाच्योऽर्थो धर्मो ब्रह्म वा सर्वथाऽपि लोकादिकार्येष्वनुगतम्। अतो यथा यत्र घटादिदृष्टिर्मृदादिदृष्ट्यनुगतैव सा। तथा साधुदृष्ट्यनुगतैव लोकादिदृष्टिः। धर्मादिकार्यत्वाल्लोकादीनाम्। यद्यपि कारणत्वमविशिष्टं ब्रह्मधर्मयोः। तथाऽपि धर्म एव साधुशब्दवाच्य इति युक्तं साधुकारी साधुर्भवतीति धर्मविषये साधुशब्दप्रयोगात्। ननु लोकादिकार्येषु कारणस्यानुगतत्वादर्थप्राप्तैव तद्दृष्टिरिति साधु सामेत्युपास्त इति न वक्तव्यम्। न। शास्त्रगम्यत्वात्तद्दृष्टेः। सर्वत्र हि शास्त्रप्रापिता एव धर्मा उपास्या न विद्यमाना अप्यशास्त्रीयाः। लोकेषु पृथिव्यादिषु पञ्चविधं पञ्चभक्तिभेदेन पञ्चप्रकारं साधु समस्तं सामोपासीत। कथम्।

---

एकस्योभयदृष्टिविषयत्वमयुक्तम्। नहि घटदृष्टिगोचरः सन्पटदृष्टेरपि गोचरः स्यादिति शङ्कते। **नन्विति**। एकस्मिन्नपि प्रस्तुतं दृष्टिद्वयमविरुद्धमिति समाधत्ते। **न साध्वर्थस्येति**। यथा घटादिषु मृदाद्यनुगतं तथा साधुशब्दार्थस्य कारणस्य लोकादिषु कार्येष्वनुगतत्वात्तद्दृष्टौ साधुदृष्टेरनुगमान्न दृष्टिद्वयस्यैकत्र विरोधोऽस्तीत्यर्थः। तदेव स्फुटयति। **साधुशब्देति**। साध्वर्थस्य लोकेष्वनुगतिरपिशब्दार्थः। यत्रेति देवदत्तोक्तिः। सा घटादिदृष्टिस्तत्रेति शेषः। ननु साधुशब्दार्थयोर्धर्मब्रह्मणोस्तुल्यं कारणत्वम्। तथा चात्र साधुशब्दार्थो न व्यवस्थितः स्यादन्याय्यं चानेकार्थत्वमित्याशङ्क्याऽऽह। **यद्यपीति**। धर्म एवेत्यत्र तथाऽपीति च वक्तव्यम्। ब्रह्मणि तु परमानन्दे साधुशब्दो भक्त्या गमयितव्यः। न च धर्मस्य निमित्तकारणत्वान्न कार्येऽनुगतिरिति वाच्यम्। कर्मापूर्वसहितदविषयःप्रभृत्यवयवसमुदायस्य धर्मत्वात्तत्परिणामत्वाच्च कार्यस्य तत्र तदनुगतिसिद्धेरिति द्रष्टव्यम्। अपूर्वत्वाभावेन विधिमाक्षिपति। **नन्विति**। कारणानुगमस्याऽऽनुमानिकत्वेऽपि तद्दृष्टिकत्वमपूर्वमेवेति परिहरति। **न शास्त्रगम्यत्वादिति**। यश्चार्थादर्थो न सचोदनार्थ इति न्यायेनोक्तं विवृणोति। **सर्वत्रेति**। लोकेष्वित्यादि वाक्ये पञ्चविधसामदृष्ट्या लोकानामुपास्यत्वप्रतीतेरत्रापि

---

१ ङ. ढ. °स्यानीति सा°। २ ख ङ. ञ. ढ. °गतो°। ३ क. °योः। ध°। ४ ख. घ. ङ. ञ. ढ. °ति कार्यवि°। ठ. °ति कर्म। ५ ङ. °मैकार्दति°। ६ ट. °त्वात्तद°। ७ क. ग. ट. ठ. ढ. °मा-प्त्यैव°। ८ ख. ञ. °स्त्रप्रणीता। ९ ख. छ. ञ. °र्थेका°। १० ख. छ. ञ. °तिव°। ११ क. ग. ट. कार्यानु°।

**कारः । अग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥**

---

पृथिवी हिंकारः । लोकेष्विति या सप्तमी तां प्रथमात्वेन विपरिणमय्य पृथिवीदृष्ट्या हिंकारे पृथिवी हिंकार इत्युपासीत । व्यत्यस्य वा सप्तमीश्रुतिं लोकविषयां हिंकारादिषु पृथिव्यादिदृष्टिं कृत्वोपासीत । तत्र पृथिवी हिंकारः । प्राथम्यसामान्यात् । अग्निः प्रस्तावः । अग्नौ हि कर्माणि प्रस्तूयन्ते । प्रस्तावश्च भक्तिः । अन्तरिक्षमुद्गीथः । अन्तरिक्षं हि गगनम् । गकारविशिष्टश्चोद्गीथः । आदित्यः प्रतिहारः । प्रतिप्राण्यभिमुखत्वान्मां प्रति मां प्रतीति । द्यौर्निधनम् । दिवि निधीयन्ते हीतो गता इत्यूर्ध्वेषूर्ध्वगतेषु लोकदृष्ट्या सामोपासनम् ॥ १ ॥

---

हिंकारदृष्ट्या पृथिव्या ध्येयत्वे प्राप्ते प्रत्याह । लोकेष्वितीति । लोकाः पञ्चविधं सामेत्युपासीतेति विभक्तिविपरिणामेन प्रथमवाक्यार्थपर्यवसानात्तदनुसारेणात्रापि पृथिवीदृष्ट्या हिंकारे ध्येये सति पृथिवी हिंकार इति पृथिवीदृष्टिमारोप्य हिंकारमुपासीतेति द्वितीयवाक्यं पर्यवस्यतीत्यर्थः । लोकसंबद्धा सप्तमी हिंकारादिषु तत्संबद्धा च द्वितीया लोकेषु नेतव्या । तथा च लोकविषया सप्तमीश्रुतिर्हिंकारादिषु तत्संबद्धा च द्वितीया लोकेषु व्यत्यस्य पृथिव्यादिदृष्टिं हिंकारादिषु कृत्वोपासीतेति पक्षान्तरमाह । व्यत्यस्येति । ब्रह्मदृष्टिरुत्कर्षादिति न्यायेन पक्षद्वयमुक्त्वा प्रतिवाक्यं व्याचष्टे । तत्रेति । उत्कर्षात्पक्षेऽन्योपासने प्रस्तुते सतीति यावत् । अध्यासस्य सादृश्यनिबन्धनत्वाद्व्यक्तसादृश्याभावेऽपि यथा कथंचित्कल्पनीयमिति मत्वाऽऽह । प्राथम्येति । लोकेषु पृथिव्याः सामसु च हिंकारस्य च प्राथम्यमस्ति तस्मात्सामान्यादिति यावत् । अग्निदृष्ट्या प्रस्तावोपासने प्रस्तावत्वं सामान्यमाह । अग्नौ हीति । अन्तरिक्षदृष्ट्योद्गीथोपासने गकारसंबन्धसादृश्यं दर्शयति । अन्तरिक्षं हीति । आदित्यदृष्ट्या प्रतिहारोपास्तौ प्रतिशब्दसामान्यं हेतुमाह । प्रतिप्राणीति । द्युदृष्ट्या निधनोपासने निधनत्वसामान्यमाह । दिवीति । उक्तमुपासनमुपसंहरति । इत्यूर्ध्वेष्विति ॥ १ ॥

---

१ क. ख. घ. ङ. ञ. ठ. ड. ढ. °णम्य पृ° । २ क. ग. च. ट. °थिव्यादिदृ° । ३ क. ग. ट. ड. °सप्तमीं श्रु° । ४ ग. ङ. ढ. °रिक्षे हि गगन° । ५ क. ग. ट. °पूर्ध्वं ग° । ६ क. ग. ट. °स्य प्रा° । ७ ख. छ. ञ. ट. °ति । ऊर्ध्वगतेष्विति ।

**अथाऽऽवृत्तेषु द्यौर्हिंकार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥**

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामोपास्ते ॥ ३ ॥**

**इति द्वितीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥**

---

अथाऽऽवृत्तेष्ववाङ्मुखेषु पञ्चविधमुच्यते सामोपासनम् । गत्यागतिविशिष्टा हि लोकाः । यथा ते तथादृष्टचैव सामोपासनं विधीयते यतोऽत आवृत्तेषु लोकेषु । द्यौर्हिंकारः प्राथम्यात् । आदित्यः प्रस्तावः । उदिते ह्यादित्ये प्रस्तूयन्ते कर्माणि प्राणिनाम् । अन्तरिक्षमुद्गीथः पूर्ववत् । अग्निः प्रतिहारः । प्राणिभिः प्रतिहरणादग्नेः । पृथिवी निधनम् । तत आगतानामिह निधनात् ॥ २ ॥

उपासनफलं कल्पन्ते समर्था भवन्ति हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च गत्यागतिविशिष्टा भोग्यत्वेन व्यवतिष्ठन्त इत्यर्थः । य एतदेवं विद्वाँल्लोकेषु पञ्चविधं समस्तं साधु सामेत्युपास्त इति सर्वत्र योजना पञ्चविधे सप्तविधे च ॥३॥ इति द्वितीयाध्यायस्य द्वितीयः खण्डः ॥२॥

---

अथाऽऽवृत्तेष्विति वाक्यं व्याकरोति । अथेति । पृथिवीमुख्येषु द्युपर्यन्तेषु पञ्चविधसामोपासनकथनानन्तर्यमथशब्दार्थः । पूर्वोत्तरग्रन्थयोर्मिथो विरोधं शङ्कित्वा परिहरति । गत्यागतीति । यथा वा ते गतिविशिष्टास्तथादृष्टचैव हिंकाराद्युपासनं विहितम् । यथा चाऽऽगतिविशिष्टास्ते तथादृष्टचैव तदुपासनं विधीयते । तथा च शास्त्रानुसारेण क्रियमाणयोरुपासनयोर्न विरोधोऽस्तीत्यर्थः । द्विधोपास्तिविषयसंदर्भयोर्विरोधाभावमनूद्य फलितमुपासनं दर्शयति । यत इति । द्युलोकदृष्टचा हिंकारस्योपास्यत्वे हेतुमाह । प्राथम्यादिति । आवृत्तौ द्युलोकस्याऽऽरम्भे च हिंकारस्य प्राथम्यं द्रष्टव्यम् । आदित्यदृष्टचा प्रस्तावस्योपास्यत्वे हेतुमाह । उदित इति । पूर्ववदिति गकाराक्षरसामान्यं विवक्षितम् । अग्निदृष्टचा प्रतिहारोपास्तौ हेतुमाह । प्राणिभिरिति । प्रतिहरणमितस्ततो नयनम् ॥ २ ॥

साध्वितिपदं सर्वत्र द्रष्टव्यमित्याह । इति सर्वत्रेति । सर्वत्रेत्यस्य व्याख्या । पञ्चविध इत्यादि ॥ ३ ॥ इति द्वितीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

१ ख. ञ. ड. °दित आदि°। २ क. द्विविधो । ग. ट. द्वित्वोपा°।

**वृष्टौ पञ्चविधꣳ सामोपासीत पुरोवातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥**

**उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधꣳ सामोपास्ते॥२॥**

**इति द्वितीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥**

---

वृष्टौ पञ्चविधं सामोपासीत । लोकस्थितेर्वृष्टिनिमित्तत्वादानन्तर्यम् । पुरोवातो हिंकारः । पुरोवाताद्युद्ग्रहणान्ता हि वृष्टिः । यथा साम हिंकारादिनिधनान्तम् । अतः पुरोवातो हिंकारः । प्राथम्यात् । मेघो जायते स प्रस्तावः । प्रावृषि मेघजनने वृष्टेः प्रस्ताव इति हि प्रसिद्धिः । वर्षति स उद्गीथः । श्रैष्ठ्यात् । विद्योतते स्तनयति स प्रतिहारः । प्रतिहृतत्वात् ॥ १ ॥

उद्गृह्णाति तन्निधनम् । समाप्तिसामान्यात् । फलमुपासनस्य वर्षति हास्मा इच्छातः । तथा वर्षयति हासत्यामपि वृष्टौ य एतदित्यादि पूर्ववत् ॥ २ ॥ इति द्वितीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

ननु लोकदृष्ट्या सामोपास्त्यनन्तरं किमिति वृष्टिदृष्ट्या तदुपास्तिरुपन्यस्यते तत्राऽऽह । **लोकस्थितेरिति** । पुरोवातदृष्ट्या हिंकारोपासने हेतुमाह । **पुरोवातादीति** । उद्ग्रहणं वर्षोपसंहरणम् । अतःशब्दार्थमाह । **प्राथम्यादिति** । मेघजन्मदृष्ट्या प्रस्तावोपास्तौ हेतुमाह । **प्रावृषीति** । वर्षणदृष्ट्योद्गीथोपासने हेतुमाह । **श्रैष्ठ्यादिति** । विद्योतनस्तनयित्नुदृष्ट्या प्रतिहारोपासने कारणमाह । **प्रतिहृतत्वादिति** । विद्युतां स्तनयित्नूनां च प्रतिहृतत्वं विप्रकीर्णत्वं तेन प्रतिशब्दसादृश्याद्विद्योतनादिदृष्ट्या कर्तव्या प्रतिहारोपास्तिरित्यर्थः ॥ १ ॥

उद्ग्रहणदृष्ट्या निधनोपासने निदानमाह । **समाप्तीति** । वर्षति पर्जन्ये तदनुमन्तृत्वमकिंचित्करमित्याशङ्क्याऽऽह । **असत्यामपीति** ॥ २ ॥ इति द्वितीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

१ क. ख. ज. मेघोपज°। २ घ. ङ. °ति प्र°। ३ ख. घ. °द्गृ । यद्गुद्गृ । ४ क. °सनहे°।

सर्वास्वप्सु पञ्चविधꣳसामोपासीत मेघो यत्सं-
प्लवते स हिंकारो यद्वर्षति स प्रस्तावो याः प्रा-
च्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्र-
तिहारः समुद्रो निधनम् ॥ १ ॥
न हाप्सु प्रैत्यप्सुमान्भवति य एतदेवं विद्वा-
न्सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥ २ ॥
इति द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥
ऋतुषु पञ्चविधꣳ सामोपासीत वसन्तो हिंका-

---

सर्वास्वप्सु पञ्चविधं सामोपासीत । वृष्टिपूर्वकत्वात्सर्वासामपामानन्तर्यम् । मेघो यत्संप्लवत एकीभावेनेतरेतरं घनी भवति मेघो यदा उंन्नतस्तदा संप्लवत इत्युच्यते । मेघस्तदाऽपामारम्भः स हिंकारः । यद्वर्षति स प्रस्तावः । आपः सर्वतो व्याप्तुं प्रस्तुताः । याः प्राच्यः स्यन्दन्ते स उद्गीथः । श्रैष्ठ्यात् । याः प्रतीच्यः स प्रतिहारः प्रतिशब्दसामान्यात् । समुद्रो निधनम् । तन्निधनत्वादपाम् ॥ १ ॥

न हाप्सु प्रैति । नेच्छति चेत् । अप्सुमानम्मान्भवति फलम् ॥ २ ॥
इति द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

ऋतुषु पञ्चविधं सामोपासीत । ऋतुव्यवस्थाया यथोक्तान्निमित्तत्वादानन्तर्यम् । वसन्तो हिंकारः । प्राथम्यात् । ग्रीष्मः प्रस्तावः । यवादिसं-

---

किमिति वृष्टिदृष्टेरनन्तरमपां दृष्टिः साम्नि क्षिप्यते तत्राऽऽह । वृष्टिपूर्वकत्वादिति । मेघसंप्लवदृष्ट्या हिंकारमारम्भसामान्याद्रुपासीतेत्याह । मेघ इति । वर्षदृष्ट्या प्रस्तावस्योपास्यत्वे हेतुमाह । आप इति । प्राच्यो नद्यो गङ्गाद्याः । प्रतीच्यस्तु नर्मदाद्या इति भेदः ॥ १ ॥

तर्हि गङ्गादावपेक्षितमपि मरणं न स्यादिति चेत्तत्राऽऽह । नेच्छति चेदिति । असावुपासको मरुस्थलीष्वपि यथेच्छमुदकवान्भवतीत्यर्थः ॥ २ ॥ इति द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

किमिति सलिलदृष्ट्यनन्तरमृतुदृष्टिः साम्न्यारोप्यते तत्राऽऽह । ऋतुव्यवस्थाया इति ॥ १ ॥

---

१ क. उन्नतो वा तदा । ङ. च. ढ. ढ. उन्नत॰ । २ क. ग. घ. च. ट. ठ. ॰साम्भ॰ । ३ ख. ग. घ. ञ. ट. ठ. ॰थोक्तोपास्तिनिमि॰ । ४ ख. ग. ञ. साम्न्यारो॰ ।

रो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनम् ॥ १ ॥

कल्पन्ते हास्मा ऋतव ऋतुमान्भवति य एतदेवं विद्वानृतुषु पञ्चविध ँ सामोपास्ते ॥ २ ॥

इति द्वितीयाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

पशुषु पञ्चविध ँ सामोपासीताजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनम् ॥ १ ॥

---

ग्रहः प्रस्तूयते हि प्रावृडर्थम् । वर्षा उद्गीथः । प्राधान्यात् । शरत्प्रतिहारः । रोगिणां मृतानां च प्रतिहरणात् । हेमन्तो निधनम् । निवाते निधनात्प्राणिनाम् ॥ १ ॥

फलं कल्पन्ते ह ऋतुव्यवस्थानुरूपं भोग्यत्वेनास्मा उपासकायर्तवः । ऋतुमानार्तवैर्भोगैश्च संपन्नो भवतीत्यर्थः ॥ २ ॥ इति द्वितीयाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

पशुषु पञ्चविधं सामोपासीत । सम्यग्वृत्तेष्वृतुषु पशव्यः काल इत्यानन्तर्यम् । अजा हिंकारः । प्राधान्यात्प्राथम्याद्वा । अजः पशूनां प्रथम इति श्रुतेः । अवयः प्रस्तावः । साहचर्यदर्शनादजावीनाम् । गाव उद्गीथः । श्रैष्ठ्यात् । अश्वाः प्रतिहारः । प्रतिहरणात्पुरुषाणाम् । पुरुषो निधनम् । पुरुषाश्रयत्वात्पशूनाम् ॥ १ ॥

---

ऋतुव्यवस्थानुरूपं तैत्र क्रियाविशेषणम् । कस्यचिदनुपासितुरपि क्रमेण तत्तदृतुफलभोगभागितोपपत्तेर्नेदमुपासनानुरूपं फलमित्याशङ्क्याऽऽह । ऋतुमानिति । संपन्नः सर्वदा स्वेच्छावशादिति शेषः ॥ २ ॥ इति द्वितीयाध्यायस्य पञ्चमः खण्डः ॥५॥

ऋतुदृष्ट्यनन्तरं साम्नि पशुदृष्ट्यारोपकारणमाह । सम्यगिति । अजादृष्ट्या हिंकारोपासने हेतुद्वयमाह । प्राधान्यादित्यादिना । अजाया यज्ञसंबन्धात्प्राधान्यम् । प्राथम्यं तु प्रथमपाठादिति द्रष्टव्यम् । ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्तेति श्रुतिमजाप्राधान्ये प्रमाणयति । अज इति । तस्माज्जावा अजावय इति श्रुतेरजानामवीनां च साहचर्यं हिंकारप्रस्तावयोश्च साहचर्यं प्रसिद्धम् ॥ १ ॥

---

१ क. ख. ङ. ढ. °निधाना°। २ घ. ङ. ढ. °चर्यादजानाम् । ३ ख. ञ. ढ. °नात् । गा°। ४ ग. ट. तक्रिया°। ५ ट. °रोगे का°।

भवन्ति हास्य पशवः पशुमान्भवति य एतदेवं विद्वान्पशुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥

इति द्वितीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयाꣳसि वा एतानि॥ १॥

---

फलं भवन्ति हास्य पशवः पशुमान्भवति । पशुफलैश्च भोगत्यागादिभिर्युज्यत इत्यर्थः ॥ २ ॥ इति द्वितीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

प्राणेषु पञ्चविधं परोवरीयः सामोपासीत । परंपरं वरीयस्त्वगुणवत्प्राणदृष्टिविशिष्टं सामोपासीतेत्यर्थः । प्राणो घ्राणं हिंकारः । उत्तरोत्तरवरीयसां प्राथम्यात् । वाक्प्रस्तावः । वाचा हि प्रस्तूयते सर्वम् । वाग्वरीयसी प्राणात् । अप्राप्तमप्युच्यते वाचा प्राप्तस्यैव तु गन्धस्य ग्राहकः प्राणः । चक्षुरुद्गीथः । वाचो बहुतरविषयं प्रकाशयति चक्षुरतो वरीयो वाच उद्गीथः । श्रैष्ठ्यात् । श्रोत्रं प्रतिहारः । प्रतिहृतत्वात् । वरीयश्चक्षुषः सर्वतः श्रवणात् । मनो निधनम् । मनसि हि निधीयन्ते पुरुषस्य भोग्यत्वेन सर्वेन्द्रियाहृता विषयाः । वरीयस्त्वं च श्रोत्रान्मनसः । सर्वेन्द्रियविषयव्यापकत्वात् । अतीन्द्रियविषयोऽपि मनसो गोचर एवेति । यथोक्तहेतुभ्यः परोवरीयांसि प्राणादीनि वा एतानि॥ १ ॥

---

पशुमान्भवतीत्यस्य पूर्वेण पौनरुक्त्यं परिहरति । पशुफलैश्चेति ॥ २ ॥ इति द्वितीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

पशुप्रसूतपयोघृतादिनिमित्तत्वात्प्राणस्थितेस्तद्दृष्ट्यनन्तरं प्राणदृष्ट्या सामोपास्तिं प्रस्तौति । प्राणेष्विति । प्राणशब्दस्य मुख्यप्राणविषयत्वं व्यावर्तयति । घ्राणमिति । मुख्यप्राणादुत्तरेषां वरीयस्त्वासंभवात्तस्य सर्वश्रेष्ठताया निर्धारितत्वात्परंपरं वरीयसां वागादीनां मध्ये प्रथमभावित्वेनोक्तत्वाद्घ्राणमेवात्र प्राणशब्दमित्यर्थः । कथं प्राणाद्वाचो वरीयस्त्वं तत्राऽऽह । वाचेति । अप्राप्तत्वं व्यवहितत्वम् । चक्षुषो वरीयस्त्वं साधयति । वाच इति । शब्दस्येति यावत् । वाचः शब्दात्सकाशादित्यर्थः । उद्गीथत्वे चक्षुषो हेतुमाह । श्रैष्ठ्यादिति । मनसो वरीयस्त्वे हेत्वन्तरमाह । अतीन्द्रियेति । इति वरीयस्त्वमिति पूर्वेण संबन्धः । अप्राप्तमप्युच्यते वाचेत्यादयो यथोक्तहेतवः॥ १॥

---

१ ङ. च. °गयागा°। २ ख. ञ. °णदृष्टिव°। ३ क. ग. च. ट. ठ. °घ्राणो । ४ ख. ङ. ञ. ड. ढ. °प्राप्तं ह्युच्य°। ५ क. ग. घ. ङ. ट. ठ. ड. ढ. °णः । वा°। ६ ख. ञ. °तरं वि°। ७ क. ग. च. ट. °हृतवि°। ८ ङ. °व्यापारत्वा° ९ ख. ञ. °सि घ्राणा°। १० क. छ. घ्राण इति । ११ ख. ञ. °ध्रै पृथग्भावि°।१२ क. °घ्राण एवा । १३ क. °ब्द इत्य°।

परोवरीयो हास्य भवति परोवरीयसो ह लो-
काञ्जयति य एतदेवं विद्वान्प्राणेषु पञ्चविधं प-
रोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥ २ ॥

इति द्वितीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

अथ सप्तविधस्य वाचि सप्तविध ँ सामोपासी-
त यत्किंच वाचो हुमिति स हिंकारो यत्प्रेति
स प्रस्तावो यदेति स आदिः ॥ १ ॥

यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो य-
दुपेति स उपद्रवो यन्नीति तन्निधनम् ॥ २ ॥

---

एतद्दृष्ट्या विशिष्टं[1] यः परोवरीयः सामोपास्ते परोवरीयो हास्य जीवनं भवतीत्युक्तार्थमिति तु पञ्चविधस्यं साम्न उपासनमुक्तमिति सप्तविधे[3] वक्ष्यमाणविषये बुद्धिसमाधानार्थम् । निरपेक्षो हि पञ्चविधे वक्ष्यमाणे बुद्धिं समाधित्सति ॥२॥ इति द्वितीयाध्यायस्य सप्तमः खण्डः ॥७॥

अथानन्तरं सप्तविधस्य समस्तस्य साम्न उपासनं साध्विदमारभ्यते । वाचीति सप्तमी पूर्ववत् । वाग्दृष्टिविशिष्टं सप्तविधं सामोपासीतेत्यर्थः । यत्किंच वाचः शब्दस्य हुमिति यो विशेषः स हिंकारो हकारसामान्यात् । यत्प्रेति शब्दरूपं स प्रस्तावः प्रसामान्यात् । यदा इति स आदिः । आकारसामान्यात् । आदिरित्योंकारः । सर्वादित्वात् ॥ १ ॥

यदुदिति स उद्गीथः । उत्पूर्वत्वादुद्गीथस्य । यत्प्रतीति स प्रतिहारः । प्रतिसामान्यात् । यदुपेति स उपद्रव उपोपक्रमत्वादुपद्रवस्य । यन्नीति तन्निधनम् । निशब्दसामान्यात् ॥ २ ॥

---

उक्तोपसंहारविरहेऽपि वक्ष्यमाणे बुद्धिसमाधानं किं न स्यादित्याशङ्क्याऽऽह । **निरपेक्षो हीति** ॥ २ ॥ इति द्वितीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

अधिकसंख्याज्ञानस्याल्पसंख्याज्ञानपूर्वकत्वात्पञ्चविधोपासनान्तरं सप्तविधोपासनं प्रस्तौति । **अथेति** । पूर्ववल्लोकेष्वितिवत्सप्तमी च नेतव्येत्यर्थः । वाक्शब्देन शब्दसामान्यमुच्यते तत्सप्तधा प्रविभक्तसामावयवेष्वारोप्योपासनं कर्तव्यमिति वाक्यार्थमाह । **वाग्दृष्टीति** । यत्किंच वाच इति वाक्योपादानं तस्यार्थमाह । **शब्दस्येति** ॥ १ ॥ ॥ २ ॥ ३ ॥ इति द्वितीयाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

१ अ. ङ. ष्टं प° । २ ङ. °स्य समस्तस्य सा° । ३ ग. च. ट. ठ. ड. °धे च व° ।

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान्वाचि सप्तविधꣳ सामोपास्ते ॥ ३ ॥ इति द्वितीयाध्यायस्याष्टमः खण्डः ॥ ८ ॥

अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामोपासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥

---

दुग्धेऽस्मा इत्याद्युक्तार्थम् ॥३॥ इति द्वितीयाध्यायस्याष्टमः खण्डः॥८॥

अवयवमात्रे साम्न्यादित्यदृष्टिः पञ्चविधेषूक्ता प्रथमे चाध्याये। अथेदानीं खल्वमुमादित्यं समस्ते साम्न्यवयवविभागशोऽध्यस्य सप्तविधं सामोपासीत । कथं पुनः सामत्वमादित्यस्येति । उच्यते । उद्गीथत्वे हेतुवदादित्यस्य सामत्वे हेतुः। कोऽसौ सर्वदा समो वृद्धिक्षयाभावात्तेन हेतुना सामाऽऽदित्यो मां प्रति मां प्रतीति तुल्यां बुद्धिमुत्पादयति । अतः सर्वेण समोऽतः साम समत्वादित्यर्थः । उद्गीथभक्तिसामान्यवचनादेव लोकादिषूक्तसामान्याद्धिंकारादित्वं गम्यत इति हिंकारादित्वे

---

वाग्दृष्टेरनन्तरमादित्यदृष्टिर्विधीयते । तस्य वाङ्मयत्वात् । न च तद्विधानं युक्तम् । पूर्वमप्यादित्यदृष्टिविशिष्टोपासनस्योपदिष्टत्वादित्याशङ्क्याऽऽह । **अवयवमात्र इति** । तस्य सामत्वे हेतुं पृच्छति । **कथमिति** । सर्वदेत्यादिवाक्यमुत्तरत्वेनाऽऽदत्ते। **उच्यत इति** । उच्चैःसन्तमादित्यं गायन्तीत्यादित्यस्योद्गीथत्वे हेतुः श्रुत्योक्तः । तथा सामत्वेऽपि तस्य हेतुरुच्यत इत्यर्थः । तमेव प्रश्नपूर्वकं विवृणोति । **कोऽसाविति** । नोदेता नास्तमेतेत्यादिदर्शनादित्यर्थः । मां प्रतीत्यादि व्याचष्टे। **मां प्रतीति** । अन्यशब्दस्यान्यत्र वृत्तिर्नान्तरेण किंचिन्निमित्तमित्यादित्यस्य सामत्वे हेतुरुच्यते चेत्तद्भेदानां हिंकारादित्वेऽपि कुतो निमित्तं श्रुत्या नोक्तमित्याशङ्क्याऽऽह । **उद्गीथेति** । आदित्यस्योद्गीथेन सहोर्ध्वत्वं सामान्यं श्रुत्योक्तं तदनुसारेणास्मदुक्तमाथम्यादिसामान्यं यथा पृथिव्यादिषु हिंकारादित्वं गम्यते तथाऽऽदित्यप्रभेदानामपि हिंकारादित्वं शक्यावगममिति श्रुत्या तेषां तद्भावे नोक्तं कारणमित्यर्थः । तर्हि सामत्वेऽपि कारणोत्प्रेक्षासंभ-

---

१ घ. ङ. ड. ढ. °धत्वेह°। २ ख. ञ. °द्विलया°। ३ ख. घ. ङ. छ. ञ. °ति वा तु°। ४ ङ. ढ. °धत्वा°। ५ ख. छ. ञ. °शिष्टस्योपा°। ६ ख. छ. ञ. °र्ध्वत्वता°।

तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्तस्य यत्पुरोदयात्स हिंकारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हिंकुर्वन्ति हिंकारभाजिनो ह्येतस्य साम्नः ॥ २ ॥

अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशꣳसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥

---

कारणं नोक्तम् । सामत्वे पुनः सवितुरनुक्तं कारणं न सुबोधमिति समत्वमुक्तम् ॥ १ ॥

तस्मिन्नादित्येऽवयवविभागश इमानि वक्ष्यमाणानि सर्वाणि भूतान्यन्वायत्तान्यनुगतान्यादित्यमुपजीव्यत्वेनेति विद्यात् । कथं तस्याऽऽदित्यस्य यत्पुरोदयाद्धर्मरूपं स हिंकारो भक्तिस्तत्रेदं सामान्यं यत्तस्य हिंकारभक्तिरूपं तदस्याऽऽदित्यस्य साम्नः पशवो गवादयोऽन्वायत्ता अनुगतास्तद्भक्तिरूपमुपजीवन्तीत्यर्थः ।

यस्मादेवं तस्मात्ते हिंकुर्वन्तिपशवः प्रागुदयात् । तस्माद्धिंकारभाजिनो ह्येतस्याऽऽदित्याख्यस्य साम्नस्तद्भक्तिभजनशीलत्वाद्धि त एवं वर्तन्ते॥२॥

अथ यत्प्रथमोदिते सवितृरूपं तदस्याऽऽदित्याख्यस्य साम्नः स प्रस्तावस्तदस्य मनुष्या अन्वायत्ताः पूर्ववत् । तस्मात्ते प्रस्तुतिं प्रशंसां कामयन्ते[3] । यस्मात्प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥

---

यान्न वक्तव्यं कारणमित्याशङ्क्याऽऽह । सामत्वे पुनरिति । समत्वं तत्र निमित्तमिति यावत् ॥ १ ॥

समः सर्वेणेत्युक्तं व्यक्तीकरोति । तस्मिन्निति । वेदनप्रकारं प्रश्नपूर्वकं प्रकटयति । कथमित्यादिना । धर्मरूपं सुखकरत्वात् । धर्मकार्यात्मकं रूपमिति यावत् । तद्दृष्ट्या हिंकारोपासने प्राथम्यं हेतुः ।

पशवो यथोक्तमादित्यरूपमुपजीवन्तीत्यत्र किं प्रमाणं तदाह । यस्मादिति । तेषां हिंकरणं साधयति । तस्मादित्यादिना । तद्भक्तिभजनशीलत्वादित्यस्मात्प्रागेव तस्मादित्यस्य संबन्धः ॥ २ ॥

सवितरि प्रथमोदिते सति यत्तस्य रूपं तद्दृष्ट्या प्रस्तावस्योपास्यत्वे पूर्वस्मादानन्तर्यं हेतुः । यथोदयात्प्राचीनं रूपं पशुभिरुपजीव्यते तथेत्याह । पूर्ववदिति । उदयात्पराचीनमादित्यरूपं मनुष्या उपजीवन्तीत्यत्र लिङ्गमाह । तस्मादिति । प्रत्यक्षपरोक्षभावेन प्रस्तुतिप्रशंसयोर्भेदः ॥ ३ ॥

---

१ ख. घ. ङ. ञ. ठ. ड. ढ. गौता हि ते व° । २ ख. ङ. ञ. ट. ट. °सः प्र° । ३ क. ख. ञ. ड. ढ. °न्ते । तस्मा° । ४ क. ग. ट. °रूपत्वं मु° ।

अथ यत्संगववेलाया ँ स आदिस्तदस्य वया ँ स्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायाऽऽत्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥

अथ यत्संप्रति मध्यंदिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥

अथ यदूर्ध्वं मध्यंदिनात्प्रागपराह्णात्स प्रतिहार-

---

अथ यत्संगववेलायां गवां रश्मीनां संगमनं संगमो यस्यां वेलायां गवां वा वत्सैः सा संगववेला तस्मिन्काले यत्सावित्रं रूपं स आदिर्भक्तिविशेष ओंकारस्तदस्य वयांसि पक्षिणोऽन्वायत्तानि । यत एवं तस्मात्तानि वयांस्यन्तरिक्षेऽनारम्बणान्यनालम्बनान्यात्मानमादायाऽऽत्मानमेवाऽऽलम्बनत्वेन गृहीत्वा परिपतन्ति गच्छन्त्यत आकारसामान्यादादिभक्तिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥

अथ यत्संप्रति मध्यंदिन ऋजुमध्यंदिन इत्यर्थः । स उद्गीथभक्तिस्तदस्य देवा अन्वायत्ताः । द्योतनातिशयात्तत्काले । तस्मात्ते सत्तमा विशिष्टतमाः प्राजापत्यानां प्रजापत्यपत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः॥५॥

अथ यदूर्ध्वं मध्यंदिनात्प्रागपराह्णाद्यद्रूपं सवितुः स प्रतिहारस्तदस्य

---

गोशब्दवाच्यानां रश्मीनां जगन्मण्डलेन संगमनं संबन्धगमनमित्यर्थः । वत्सैः संगमनमिति संबन्धः । संगवकालीनमादित्यरूपमारोप्याऽऽदिभक्तेरोंकारस्योपास्यत्वे द्वयोराकारसामान्यं हेतुः । पक्षिणां यथोक्तमादित्यरूपमुपजीव्यमित्यत्र हेतुमाह । यत इति ॥ ४ ॥

ऋजुमध्यंदिने यदादित्यस्य रूपं तद्दृष्ट्योद्गीथोपासने श्रैष्ठ्यं हेतुः । तत्कालीनादित्यरूपस्य देवोपजीव्यत्वे हेतुमाह । द्योतनेति । तथाऽपि तस्य देवैरुपजीव्यत्वं कथमिति चेत्तत्राऽऽह । तस्मादिति ॥ ५ ॥

अथ यदूर्ध्वमितिवाक्यमादायव्याचष्टे । मध्यंदिनादिति । तद्दृष्ट्या प्रतिहारोपासने प्र-

---

१ ख. ञ. °क्षेणाऽऽत्°। २ क. ग. घ. ङ. च. ट. ठ. ढ. °गवो यँ°। ३ क. च. °वां व°। ४ क. ख. ग. च. ञ. ट. ठ. °त्सैः सह सं°। ५ ख. ङ. च. ञ. ड. °क्षेणान्तरिक्ष आरम्बणान्याल°। ६ ग. °दिने सवितुर्मध्यं°।

स्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता ना-
वपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥६॥
अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्त-
दस्याऽऽरण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा
कक्षꣳ श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य
साम्नः ॥ ७ ॥
अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पित-
रोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो

---

गर्भा अन्वायत्ताः। अतस्ते सवितुः प्रतिहारभक्तिरूपेणोर्ध्वं प्रतिहृताः सन्तो नावपद्यन्ते नाधः पतन्ति तद्वारे सत्यपीत्यर्थः। यतः प्रतिहारभाजिनो ह्येतस्य साम्नो गर्भाः ॥ ६ ॥

अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्तदस्याऽऽरण्याः पशवोऽन्वायत्ताः। तस्मात्ते पुरुषं दृष्ट्वा भीताः कक्षमरण्यं श्वभ्रं भयशून्यमित्युपद्रवन्त्युपगच्छन्ति दृष्ट्वोपद्रवणादुपद्रवभाजिनो ह्येतस्य साम्नः॥७॥

अथ यत्प्रथमास्तमितेऽदर्शनं जिगमिषति सवितरि तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति पितृपितामहप्रपितामहरूपेण दर्भेषु निक्षिपन्ति तांस्तदर्थं पिण्डान्वा स्थापयन्ति । निधनसंबन्धान्निध-

---

तिशब्दसामान्यं हेतुः। तस्मिन्काले सवितुरस्तं गिरिं प्रति हरणात्। यथोक्तमादित्यरूपं गर्भैरुपजीव्यमित्यत्र गमकमाह। अत इति। ऊर्ध्वं योनेरुपरिष्टाज्जठरं प्रतीत्यर्थः। यतो गर्भाः पूर्वोक्तविशेषणवन्तोऽत इति यावत्। तद्वारं पतनद्वारम् ॥ ६ ॥

तत्र तत्कालीनादित्यदृष्ट्योपद्रवमुपासीत तस्य तदाऽस्ताचलं प्रत्युपद्रवणादित्याह। **अथेति**। आरण्यानां पशूनां यथोक्तरूपोपजीवनमुपपादयति । **तस्मादित्यादिना**। श्वभ्रं गर्तं गुहेति यावत् ॥ ७ ॥

तत्सवितृरूपमिति शेषः। तद्दृष्ट्या निधनोपासने समाप्तिसामान्यं हेतुः। यथोक्तमादित्यरूपं पितृभिरुपजीव्यमित्यत्र गमकमाह। **तस्मादित्यादिना**। तत्र तत्राप-

---

१ क. ग. घ. ङ. ट. ठ. ड. ढ. °न्ति द्वारे°। २ क. ग. ट. °साम्यं हे°।

**ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ॥ ८ ॥ इति द्वितीयाध्यायस्य नवमः खण्डः ॥ ९ ॥**

**अथ खल्वात्मसंमितमतिमृत्यु सप्तविधꣳ सा-**

नभाजिनो ह्येतस्य साम्नः पितरः । एवमवयवशः सप्तधा विभक्तं खल्वमुमादित्यं सप्तविधं सामोपास्ते[1] यस्तस्य तदापत्तिः फलमिति वाक्यशेषः ॥ ८ ॥ इति द्वितीयाध्यायस्य नवमः खण्डः ॥ ९ ॥

मृत्युरादित्यः । अहोरात्रादिकालेन जगतः प्रमापयितृत्वात्तस्यातितरणायेदं सामोपासनमुपदिश्यते । अथ खल्वनन्तरम् । आदित्यमृत्युविषयसामोपासनस्याऽऽत्मसंमितं स्वावयवतुल्यतया मितं परमात्मतुल्यतया वा संमितमतिमृत्यु मृत्युजयहेतुत्वात् । यथा प्रथमेऽध्याय उद्गीथभक्तिनामाक्षराण्युद्गीथ इत्युपास्यत्वेनोक्तानि । तथेह साम्नः सप्तविधभक्तिनामाक्षराणि समाहृत्य त्रिभिस्त्रिभिः समतया सामत्वं परिकल्प्योपास्यत्वेनोच्यन्ते । तदुपासनेन मृत्युगोचराक्षरसंख्यासामान्येन तं मृत्युं प्राप्य तदतिरिक्ताक्षरेण तस्याऽऽदित्यस्य मृत्योरतिक्रमणायैव

---

शब्दस्तत्तदुपासनानन्तर्यार्थो व्याख्येयः । एवं खल्वित्यादिवाक्यमपेक्षितं पूरयन्व्याकरोति । **एवमिति** ॥ ८ ॥ इति द्वितीयाध्यायस्य नवमः खण्डः ॥ ९ ॥

अथ खल्वात्मसंमितमित्यादेस्तात्पर्यमाह । **मृत्युरिति** । अनन्तरमित्यस्यापेक्षितं निक्षिपति । **आदित्येति** । स्वशब्देन सामोच्यते तस्यावयवा हिंकारादयस्तन्नामाक्षराणां त्रित्वेन त्रित्वेन तुल्यतया मितं ज्ञातं सामेत्यर्थः । यथा परमात्मावगमो मृत्योर्मोक्षणहेतुस्तथेदमुपासनमपीत्यर्थान्तरमाह । **परमात्मेति** । कीदृगत्रोपासनं विवक्षितमित्यपेक्षायां सदृष्टान्तमुत्तरमाह । **यथेत्यादिना** । उद्गीथ इत्युद्गीथभक्तेर्नाम तदक्षराणीति यावत् । सामत्वं तेषां नामाक्षराणामित्यध्याहार्यम् । तदुपासनं तेषामक्षराणामादित्यदृष्ट्योपासनमित्यर्थः । मृत्युगोचराक्षरसंख्यैकविंशतित्वलक्षणा साऽस्त्येकाऽनेकेष्वक्षरेषु तत्सामान्येन तेष्वक्षरेष्वादित्यदृष्ट्या मृत्युमादित्यमित्यर्थः । अतिक्रमणाय

---

१ ख. ङ. च. ञ. ढ. °वमेवाव°। २ ख. ङ. ञ. ड. ढ. °स्ते तस्य । ३ ख. ङ. ञ. ढ. °गतो मा°। ४ ख. च. ङ. °त्मना तु°। ५ ग. घ. ङ. च. ट. ड. °मृत्व्वत्यवल्व°। ६ ङ. °धाऽऽयेऽध्या°। ७ ख. घ. ञ. ठ. °थमाध्या°। ८ क. च. ढ. °कल्प्य त°। ङ. कल्पते। त°। ९ क. ग. ट. ठ. ड. °न मृ°। १० ग. छ. ट. °न तु°। ११ ख. छ. ञ. °परमात्मनेति । १२ ञ. °ना । इ°। १३ क. ग. ट. °दित्यादिद°। १४ ग. ट. °तिल°। १५ क. ग. ट. °क्रमाय°।

मोपासीत हिंकार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ॥ १ ॥

आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम् ॥ २ ॥

उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम् ॥ ३ ॥

निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वावि ँ्शतिरक्षराणि ॥ ४ ॥

---

संक्रमणं कल्पयति । अतिमृत्यु सप्तविधं सामोपासीत मृत्युमतिक्रान्तमतिरिक्ताक्षरसंख्ययेत्यतिमृत्युं साम । तस्य प्रथमभक्तिनामाक्षराणि हिंकार ईत्येतत्र्यक्षरं भक्तिनाम प्रस्ताव इति च भक्तेस्त्र्यक्षरमेव नाम तत्पूर्वेण समम् ॥ १ ॥

आदिरिति द्व्यक्षरं सप्तविधस्य साम्नः संख्यापूरण ओंकार आदिरित्युच्यते । प्रतिहार इति चतुरक्षरम् । तत इहैकमक्षरमवच्छिद्याऽऽद्यक्षरयोः प्रक्षिप्यते । तेन तत्सममेव भवति ॥ २ ॥

उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यतेऽतिरिच्यते । तेन वैषम्ये प्राप्ते साम्नः समत्वकरणायाऽऽह । तदेकमपि सदक्षरमिति त्र्यक्षरमेव भवति । अतस्तत्समम् ॥ ३ ॥

निधनमिति त्र्यक्षरं तत्सममेव भवति । एवं त्र्यक्षरसमतया सामत्वं संपाद्य यथाप्राप्तान्येवाक्षराणि संख्यायन्ते । तानि ह वा एतानि सप्तभक्तिनामाक्षराणि द्वाविंशतिः ॥ ४ ॥

---

तत्साधनमुपासनमिति शेषः । अतिमृत्यु मृत्योरत्ययहेतुत्वादित्युक्तमेव स्पष्टयति । मृत्युमिति । नामाक्षराणि कथ्यन्त इति शेषः ॥ १ ॥

आद्यक्षरयोरादिभक्तिनामाक्षरयोरिति यावत् । तेन प्रक्षेपेण तदादिभक्तिनामप्रतिहारनाम्ना तुल्यमेवेत्यर्थः ॥ २ ॥ ३ ॥

ननु यथोक्तयाँ रीत्या चतुर्विंशत्यक्षराणि तत्कथं तानि ह वा एतानि द्वाविंशतिरक्षराणीति तत्राऽऽह । एवमिति ॥ ४ ॥

---

१ ख. घ. ङ. च. ञ. ठ. ढ. °त्यु सप्तविधं सा° । २ ख. ङ. ञ. ड. ढ. इत्येतत्त्र्यक्ष° । ३ क. °क्तरी° । ४ छ. °या नीत्या ।

**एकवि ँ्शत्यादित्यमाप्नोत्येकवि ँ्शो वा इतोऽसावादित्यो द्वावि ँ्शेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥ ५ ॥**

**आप्नोति हाऽऽदित्यस्य जयं परो हास्याऽऽदित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसंमितमतिमृत्यु सप्तविध ँ्सामोपास्ते सामोपास्ते ॥ ६ ॥ इति द्वितीयाध्यायस्य दशमः खण्डः ॥ १० ॥**

---

तत्रैकविंशत्यक्षरसंख्ययाऽऽदित्यमाप्नोति मृत्युम्[1]। यस्मादेकविंश[2] इतोऽस्माल्लोकादसावादित्यः संख्यया। द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकवि ँ्श इति श्रुतेरतिशिष्टेन द्वाविंशेनाक्षरेण परं मृत्योरादित्याज्जयत्याप्नोतीत्यर्थः। यच्च तदादित्यात्परं[3] किंतत्। नाकं कमिति सुखं तस्य प्रतिषेधोऽकं तन्न भवतीति नाकं कमेवेत्यर्थः। मृत्युविषयत्वाद्दुःखस्य[4] विशोकं च[5] तद्विगतशोकं मानसदुःखरहितमित्यर्थः। तदाप्नोतीति ॥ ५ ॥

उक्तस्यैवं[6] पिण्डितार्थमाहैकविंशतिसंख्ययाऽऽदित्यस्य जयमाप्नोति[7]। परो हास्यैवंविद आदित्यजयान्मृत्युगोचरात्परो जयो भवति द्वाविंशत्यक्षरसंख्ययेत्यर्थः। य एतदेवं विद्वानित्याद्युक्तार्थम्। तस्यैतद्यथोक्तं फलमिति द्विरभ्यासः साप्तविध्यसमाप्त्यर्थः[9] ॥ ६ ॥ इति द्वितीयाध्यायस्य दशमः खण्डः ॥ १० ॥

---

आदित्यस्यास्माल्लोकादेकविंशत्वे श्रुत्यन्तरं प्रमाणयति। **द्वादशेति**। हेमन्तशिशिरावेकीकृत्य पञ्चर्तव इत्युक्तम्। आदित्यस्याहोरात्राभ्यां पौनःपुन्येन मृत्युहेतुत्वमस्मिँल्लोके दृश्यते। तदयं लोको मृत्युविषयत्वाद्दुःखात्मकस्तदभावाद्ब्रह्मलोकः सुखात्मक इति मत्वाऽऽह। **मृत्युविषयत्वादिति** ॥ ५ ॥

पूर्वेणोत्तरस्य पौनरुक्त्यमाशङ्क्याऽऽह। **उक्तस्यैवेति**। व्याख्यातस्यैव ग्रन्थस्य समुदायार्थः संक्षिप्य बुद्धिसौकार्यार्थमनन्तरग्रन्थेनोच्यते। तन्न पौनरुक्त्यमित्यर्थः। जयमनु परो जयो भवतीति संबन्धः। परो हास्येत्युपात्तं वाक्यं व्याकरोति। **एवंविद इति**। फलमिति शेष इति यावत्। साप्तविध्यं सप्तविधत्वं तदुपेतसामोपासनस्य समाप्त्यर्थोऽभ्यास इत्यर्थः ॥ ६ ॥ इति द्वितीयाध्यायस्य दशमः खण्डः ॥ १० ॥

---

१ क. ग. घ. ङ. ञ. ट. ड. °प्नोतीहा°। २ ख. ञ. °विंशो वा इ°। ३ ङ. ढ. ढ. °रं ना°। ४ क. ट. °त्वात्तद्दुः°। ५ च. ड. च मा°। ६ ख. घ. ङ. ञ. ड. ढ. °व पिण्डार्थं°। ७ ङ. च. ड. ढ. °यमनुप°। ८ ख. ञ. °प्नोत्यनुप°। ९ घ. ङ. सामविद्यास°। १० क. ट °त्वात्तद्दुः°।

मनो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम्॥१॥ स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणीभवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या महामनाः स्यात्तद्व्रतम्॥२॥इति द्वितीयाध्यायस्यैकादशः खण्डः॥११॥

---

विना नामग्रहणं पञ्चविधस्य सप्तविधस्य च साम्न उपासनमुक्तम्। अथेदानीं गायत्रादिनामग्रहणपूर्वकं विशिष्टफलानि सामोपासनान्तराण्युच्यन्ते। यथाक्रमं गायत्रादीनां कर्मणि प्रयोगस्तथैव मनो हिंकारो मनसः सर्वकरणवृत्तीनां प्राथम्यात्। तदानन्तर्याद्वाक्प्रस्तावश्चक्षुरुद्गीथः श्रैष्ठ्यात्। श्रोत्रं प्रतिहारः प्रतिहृतत्वात्। प्राणो निधनं यथोक्तानां प्राणे निधनात्स्वापकाले। एतद्गायत्रं साम प्राणेषु प्रोतम्॥ १ ॥

गायत्र्याः प्राणसंस्तुतत्वात्स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति। अविकलकरणो भवतीत्येतत्। सर्वमायुरेति। शतं वर्षाणि सर्वमायुः पुरुषस्येति श्रुतेः। ज्योगुज्ज्वलं जीवति। महान्भवति प्रजादिभिर्महांश्च कीर्त्या। गायत्रोपासकस्यैतद्व्रतं भवति यन्महामनास्त्वक्षुद्रचित्तः स्यादित्यर्थः॥ २ ॥ इति द्वितीयाध्यायस्यैकादशः खण्डः॥११॥

---

ननु पञ्चविधस्य सप्तविधस्य च साम्नो ध्यानं व्याख्यातम्। तथा च ज्ञातविषये वक्तव्याभावादलमनन्तरग्रन्थेनेत्याशङ्क्य पूर्वोत्तरग्रन्थयोरर्थभेदमाह। **विनेत्यादिना।** गायत्रं रथंतरमित्यादिनामग्रहणेन विशिष्टानि विशिष्टफलानि चेत्यर्थः। कथं पुनर्वक्ष्यमाणेषूपासनेषु निर्देशक्रमसिद्धिस्तत्राऽऽह। **यथाक्रममिति।** यादृशं क्रममाश्रित्य तेषां कर्मणि प्रयोगः कर्मिणामिष्टस्तेनैव क्रमेण तदुपासनोक्तिरित्यर्थः। तत्राप्राणस्य क्रियाज्ञानयोरसंभवात्प्राणस्य प्रधानत्वात्तद्दृष्ट्या गायत्रोपास्तिमादौ दर्शयति। **मनो हिंकार इत्यादिना।** प्राणमेव वागप्येतीत्यादिश्रुत्या स्वापकाले प्राणे वागादीनां निधनमवंवेयम्। प्रोतं प्रगतं प्रतिष्ठितमिति यावत्॥ १ ॥

गायत्रस्य प्राणेषु प्रतिष्ठितत्वे हेतुमाह। **गायत्र्या इति।** प्राणो वै गायत्रीति हि श्रुतिः। अविदुषोऽपि प्राणित्वसिद्धेर्नेदं विद्याफलमित्याशङ्क्याऽऽह। **अविकलेति।** कथं पुनर्नानाजनिनं सर्वमायुरेको ध्याता गन्तुमलमित्याशङ्क्याऽऽह। **शतमिति।** शतायुर्वै पुरुष इति श्रुतेरित्युच्यते। ज्योक्शब्दो निपातः। स चोज्ज्वलनार्थः। उज्ज्वलः स्वपरोपकारसमर्थ इति यावत्॥२॥इति द्वितीयाध्यायस्यैकादशः खण्डः॥११॥

---

१ क. ग. ङ. ट. ठ. °णप्रवृ°। २ ख. ङ. च. ञ. ड. ढ. °मनस्त्वमक्षु°। ३ क. ख. ग. ङ. °इत्राक°। ४ क. ग. ट. प्राणं तर्हि वा। ५ ख. ञ. °वध्येय°।

अभिमन्थति स हिंकारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधन ँ स ँ शाम्यति तन्निधनमेतद्रथंतरमग्नौ प्रोतम् ॥ १ ॥ स य एवमेतद्रथंतरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ॥२॥ इति द्वितीयाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

अभिमन्थति स हिंकारः प्राथम्यात् । अग्नेर्धूमो जायते स प्रस्ताव आनन्तर्यात् । ज्वलति स उद्गीथो हविःसंबन्धाच्छ्रैष्ठ्यं ज्वलनस्य । अङ्गारा भवन्ति स प्रतिहारोऽङ्गाराणां प्रतिहृतत्वात् । उपशमः सावशेषत्वादग्नेः संशमो निःशेषोपशमः समाप्तिसामान्यान्निधनमेतद्रथंतरमग्नौ प्रोतम् । मन्थने ह्यग्नेर्गीयते ॥ १ ॥

स य इत्यादि पूर्ववत् । ब्रह्मवर्चसी वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसम् । तेजस्तु केवलं त्विड्भावः । अन्नादो दीप्ताग्निः । न प्रत्यङ्ङग्नेरभिमुखो नाचामेन्न भक्षयेत्किंचिन्न निष्ठीवेच्छ्लेष्मनिरसनं च न कुर्यात्तद्व्रतम् ॥ २ ॥ इति द्वितीयाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

समग्रप्राणवतो मन्थनकर्तृत्वसंभवात्प्राणदृष्टेरनन्तरं मन्थनादिदृष्टिमवतारयति । अभिमन्थतीत्यादिना । उपशमः संशमश्चेत्यर्थभेदाभावात्पुनरुक्तिमाशङ्क्य सावशेषनिरवशेषत्वाभ्यां विशेषमाह । उपशम इति । कथं पुना रथंतरसाम्नोऽग्नौ प्रतिष्ठितत्वम् । न हि तत्र किंचिन्निमित्तमुपलभ्यत अत आह । मन्थने हीति । मन्थनं निमित्तीकृत्याग्नेरुत्पत्तौ रथंतरसाम्नो गीयमानत्वदर्शनादग्नौ तस्य प्रतिष्ठितत्वसिद्धिरित्यर्थः ॥ १ ॥

नन्वत्र ब्रह्मवर्चसीति फलमुक्तं बृहदुपासने तु तेजस्वी भवतीति वक्ष्यते । न च ब्रह्मवर्चसतेजसोर्भेदस्तथा च बृहद्रथंतरोपासनयोर्न फलवैषम्यमत आह । वृत्तेति ॥ २ ॥ इति द्वितीयाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

१ क. ग. घ. ङ. च. ञ. ट. ठ. ह्यग्निर्गी°। २ ठ. ङ्ङग्निमग्ने°। ३ क. ट. °म्नोद्गीय°।

उपमन्त्रयते स हिंकारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिं स्त्रीं सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ॥ १ ॥

स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात्प्रजायते सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न कांचन परिहरेत्तद्व्रतम् ॥ २ ॥

इति द्वितीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

उपमन्त्रयते संकेतं करोति प्राथम्यात्स हिंकारः । ज्ञपयते तोषयति स प्रस्तावः । सहशयनमेकपर्यङ्कगमनं स उद्गीथः श्रैष्ठ्यात् । प्रतिं स्त्रीं शयनं स्त्रियोऽभिमुखीभावः स प्रतिहारः कालं गच्छति मैथुनेन पारं समाप्तिं गच्छति । तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् । वाय्वम्बुमिथुनसंबन्धात् ॥ १ ॥

स य इत्यादि पूर्ववत् । मिथुनीभवत्यविधुरोभवतीत्यर्थः । मिथुनान्मिथुनात्प्रजायत इत्यमोघरेतस्त्वमुच्यते । न कांचन कांचिदपि स्त्रियं स्वात्मतल्पप्राप्तां न परिहरेत्समागमार्थिनीम् । वामदेव्यसामोपासनाङ्गत्वेन विधानात् । एतस्मादन्यत्र प्रतिषेधस्मृतयः । वचनप्रामाण्याच्च धर्मावगतेर्न प्रतिषेधशास्त्रेणास्य विरोधः ॥ २ ॥ इति द्वितीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

उत्तराधरारणिस्थानीययोः स्त्रीपुरुषयोरवाच्ये कर्मणि प्रवृत्तयोर्मन्थनसामान्यान्मन्थनादिदृष्टिवदनन्तरं मैथुनदृष्टिं विदधाति । उपमन्त्रयत इत्यादिना । पुरुषो हि पशुकर्मार्थं स्त्रियं वस्त्रादिना प्रीणयति । तस्मिन्प्रारम्भसामान्यात्प्रस्तावदृष्टिरित्याह । ज्ञपयत इति । कुतो वामदेवस्य साम्नो मिथुने प्रोतत्वं तत्राऽऽह । वाय्वम्बुमिथुनेति । वायोरपां च मिथुनतया संबन्धाद्वामदेव्योत्पत्तेरुक्तत्वात्तस्य मिथुने प्रतिष्ठितत्वं युक्तमित्यर्थः ॥ १ ॥

न कांचनेतिवाक्यमादाय व्याचष्टे । कांचिदपीति । पराङ्गनां नोपगच्छेदितिस्मृतिविरोधमाशङ्क्याऽऽह । वामदेव्येति । विधिनिषेधयोः सामान्यविशेषविषयत्वेन व्यवस्था प्रसिद्धेति भावः । किंच शास्त्रप्रामाण्यादत्र धर्मोऽवगम्यते न कांचन परिहरेदिति च शास्त्रावगतत्वादवाच्यमपि कर्म धर्मो भवितुमर्हति । तथाच श्रौतेऽर्थे दुर्बलायाः स्मृतेर्न प्रतिस्पर्धितेत्याह । वचनेति । यथोक्तोपासनावतो ब्रह्मचर्यनियमाभावो व्रतत्वेन विवक्षितस्तत्र प्रतिषेधशास्त्रविरोधाशङ्केति भावः ॥ २ ॥ इति द्वितीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

१ क. ग. घ. ङ. ज. ञ. ट. ठ. °ति स्त्री स° । २ क. ग. च. ट. °र्यङ्के ग° । ३ ख. ग. घ. ङ. च. ञ. ट. ठ. ड. ढ. °मनमुद्गी° । ४ क. ग. घ. ङ. च. ट. ठ. ड. ढ. ण. °तिस्त्रीश° । ५ घ. च. स्त्रिया अभि° । ६ ख. च. ञ. ड. °तिं च ग° । ७ ख. छ. ञ. °न्यता° ।

अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥ ३ ॥ अथ यत्तपो दानमार्जवमहि॰ँसा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥ तस्मादाहुः सोष्यत्यसोष्टेति पुन-

ल्पभोजनीयानि चाहान्यांसन्नानीति प्रश्वासोऽतोऽशनादीनामुपसदां च सामान्यम् ॥ २ ॥

अथ यद्धसति यज्जक्षति भक्षयति यन्मैथुनं चरति स्तुतशस्त्रैरेव तैस्समानतामेति । शब्दवत्त्वसामान्यात् ॥ ३ ॥

अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः । धर्मपुष्टिकरत्वसामान्यात् ॥ ४ ॥

यस्माच्च यज्ञः पुरुषस्तस्मात्तं जनयिष्यति माता यदा तदाऽऽहुरन्ये सोष्यतीति तस्य मातरं यदा च प्रसूता भवति तदाऽसोष्ट पूर्णिकेति विधियज्ञ इव सोष्यति सोमं देवदत्तोऽसोष्ट सोमं यज्ञदत्त इत्यतः शब्दसामान्याद्वा पुरुषो यज्ञः । पुनरुत्पादनमेवास्य तत्पुरुषाख्यस्य यज्ञस्य यत्सोष्यत्यसोष्टेति शब्दसंबन्धित्वं विधियज्ञस्येव ।

पयोव्रतत्वं पयोभक्षणयुक्तत्वम् । यज्ञे यान्यहान्यल्पभोजनीयानि प्रसिद्धानि तानि चोपसत्सु क्रियमाणान्यांसन्नानीति तासु प्रश्वासः स्वास्थ्यविशेषः । अशनादिषु च सोऽस्तीति प्रसिद्धमितिभावः । सुखनिमित्तत्वं क्लेशनिवृत्तिहेतुत्वं च सामान्यम् ॥ २ ॥

स्तुतशस्त्रवैशिष्ट्यसाम्यादपि पुरुषस्य यज्ञत्वमित्याह । अथ यदिति । हासादिषु स्तुतशस्त्रदृष्टौ हेतुमाह । शब्दवत्त्वेति ॥ ३ ॥

दक्षिणावत्त्वसाम्यादपि पुरुषस्य यज्ञत्वमवधेयमित्याह । अथेति । तपोदानादिषु दक्षिणादृष्टौ हेतुमाह । धर्मेति ॥ ४ ॥

प्रकारान्तरेण पुरुषस्य यज्ञत्वं साधयति । यस्माच्चेति । पूङ् प्राणिप्रसवे षुञ् अभिषव इति धातुद्वयदर्शनात्प्रसवे कण्डने च साधारणः सवनशब्दस्ततः सवनशब्दवत्त्वे सामान्याद्वा पुरुषे यज्ञदृष्टिः कर्तव्येत्यर्थः । पुरुषगतं शब्दसामान्यं विशदयति । पुनरिति । यत्पुनरस्य पुरुषाख्यस्य विधियज्ञस्येव सोष्यतीत्यादिशब्दसंबन्धित्वं तदुत्पादन-

१ ञ. °न्याश्वासनानी° । २ क. तत्सामान्यमे° । ३ घ. ठ. ड. °र्मतुष्टि° । ४ ४ क. ख. ग. छ. ञ. ण. °न्यसो° । ५ ख. ग. छ. ञ. ट. ण. °न्याश्वासनानी° । ६ ग. घ. ट. °मित्यर्थः । सु° । ७ क. °ब्दसा° । ८ ग. ट. °वत्त्वसा° । ९ ख. ञ. ण. °दित्वं ।

रुत्पादनमेवास्य तन्मरणमेवावभृथः ॥ ५ ॥
तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायो-
क्त्वोवाचापिपास एव स बभूव सोऽन्तवेलाया-
मेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणस॰
शितमसीति तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥

---

किंच तन्मरणमेवास्य पुरुषयज्ञस्यावभृथः । समाप्तिसामान्यात् ॥ ५ ॥

तद्धैतद्यज्ञदर्शनं घोरो नामत आङ्गिरसो गोत्रतः कृष्णाय देवकीपुत्राय शिष्यायोक्त्वोवाच तदेतत्त्रयमित्यादिव्यवहितेन संबन्धः । स चैतद्दर्शनं श्रुत्वाऽपिपास एवान्याभ्यो विद्याभ्यो बभूव ।

इत्थं च विशिष्टेयं विद्या यत्कृष्णस्य देवकीपुत्रस्यान्यां विद्यां प्रति तृड्विच्छेदकरीति पुरुषयज्ञविद्यां स्तौति घोर आङ्गिरसः कृष्णायोक्त्वेमां विद्यां किमुवाचेति तदाह । स एवं यथोक्तयज्ञविदन्तवेलायां मरणकाल एतन्मन्त्रत्रयं प्रतिपद्येत जपेदित्यर्थः । किंतदक्षितमक्षीणमक्षतं वाऽसी-त्येकं यजुः । सामर्थ्यादादित्यस्थं प्राणं चैकीकृत्याऽऽह । तथा तमेवाऽऽहाच्युतं स्वरूपादप्रच्युतमसीति द्वितीयं यजुः । प्राणसंशितं[1] प्राणश्च स संशितं सम्यक्तनूकृतं च सूक्ष्मं तत्त्वमसीति तृतीयं यजुः । तत्रैतस्मिन्नर्थे विद्यास्तुतिपरे द्वे ऋचौ मन्त्रौ भवतः । न जपार्थे त्रयं प्रतिपद्येतेति त्रि-

---

मेव तदिति योजना । अवभृथसंबन्धित्वादपि पुरुषस्य यज्ञत्वमस्तीत्याह । किंचेति ॥५॥

पुरुषे यज्ञदृष्टिरुक्ता संप्रति विशिष्टपुरुषसंबन्धेन विद्यां स्तोतुं विद्याङ्गं च जपं विधातुमुपक्रमते । तद्धैतदिति । देवकीपुत्रस्यैतद्दर्शनश्रवणफलमाह । स चेति ।

किमर्थेयं गुरुशिष्याख्यायिकेत्याह । इत्थं चेति । अक्षितमसीति कीदृशीं देवतां प्रत्युच्यते तत्राऽऽह । सामर्थ्यादिति । निकृष्टस्य स्तुतिसंबन्धायोगात्पुरुषयज्ञे सवनदेवतान्तरानुपपत्तेश्च प्राणानामेवाऽऽधिदैविकं रूपमादित्याख्यं जप्यमन्त्रार्थत्वेन संबध्यत इत्यर्थः । द्वितीयमन्त्रस्यार्थान्तरं वारयति । तथेति । प्रथममन्त्रवदित्यर्थः । न च द्वयोरेकार्थत्वे सत्यन्यतरस्य वैयर्थ्यं द्वयोरपि जप्यत्वेनोपयुक्तत्वादिति द्रष्टव्यम् । मन्त्रत्रयप्रतिपाद्यं सावित्रं तत्त्वमृग्भ्यामपि प्रतिपादितमिति प्रत्ययदार्ढ्यार्थमाह । तत्रेति । किमिति विद्यास्तुतिपरत्वमनयोरिष्यते जपार्थत्वमेव किं न स्यात्तत्राऽऽह । नेत्यादिना । अनयोर्जपार्थत्वेऽपि त्रित्वसंख्यायाः सत्त्वान्न सा बाध्येत्याशङ्क्याऽऽह ।

---

१ न. °तं सम्य° । २ क. च. °णस्य सं° । ३ ग. ट. °त्याशङ्क्याऽऽह ।

आदित्प्रत्नस्य रेतसः । उद्वयं तमसस्परि ज्यो-

त्वसंख्याबाधनात् । पञ्चसंख्या हि तदा स्यात् ॥ ६ ॥

आदिदित्यत्राऽऽकारस्यानुबन्धस्तकारोऽनर्थक इच्छब्दश्च । प्रत्नस्य चिरंतनस्य पुराणस्येत्यर्थः । रेतसः कारणस्य बीजभूतस्य जगतः सदाख्यस्य ज्योतिः प्रकाशं पश्यन्ति । आशब्द उत्सृष्टानुबन्धः पश्यन्तीत्यनेन संबध्यते । किं तज्ज्योतिः पश्यन्ति । वासरमहरहरिव तत्सर्वतो व्याप्तं ब्रह्मणो ज्योतिः । निवृत्तचक्षुषो ब्रह्मविदो ब्रह्मचर्यादिनिवृत्तिसाधनैः शुद्धान्तःकरणा आ समन्ततो ज्योतिः पश्यन्तीत्यर्थः । परः परमिति लिङ्गव्यत्ययेन । ज्योतिष्परत्वात् । यदिध्यते दीप्यते दिवि द्योतनवति परस्मिन्ब्रह्मणि वर्तमानम् । येन ज्योतिषेद्धः सविता तपति चन्द्रमा भाति विद्युद्विद्योतते ग्रहतारागणा विभासन्ते । किंचान्यो मन्त्रदृगाह । यथोक्तं ज्योतिः पश्यन् । उद्वयं तमसोऽज्ञानलक्षणात्परि पर-

पञ्चेति । अनयोर्जप्यत्वे पञ्चकं प्रतिपद्येतेति पञ्चसंख्याया वक्तव्यत्वान्त्रित्वं बाधितं स्यादित्यर्थः ॥ ६ ॥

आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम् । परो यदिध्यते दिवीति मन्त्रस्य प्रतीकग्रहणमादित्प्रत्नस्य रेतस इति तत्पदच्छेदपूर्वकं व्याचष्टे । आदित्यादिना । इच्छब्दश्चानर्थक इति पूर्वेण संबन्धः । किंतत्कारणमित्यपेक्षायां सदेवं सोम्येदमित्यादिश्रुतिसिद्धं ब्रह्मेत्याह । सदाख्यस्येति । आनन्दं ब्रह्मणो विद्वानितिवत्प्रत्नस्य ज्योतिरिति संबन्धो द्रष्टव्यः । उत्सृष्टानुबन्धो ध्वस्ततकारः स इति यावत् । ननु ब्रह्मस्वरूपभूतमेतज्ज्योतिर्नैव सर्वे पश्यन्तो दृश्यन्ते तत्राऽऽह । निवृत्तचक्षुष इति । निवृत्तानि विमुखीकृतानि विषयेभ्यश्चक्षूंषि करणानि येषां ते तथा । अत एव ब्रह्मविदः कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्निति श्रुत्यन्तरम् । तत्रैवोपायान्तरं सूचयति । ब्रह्मचर्यादीति । स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् । ब्रह्मचर्यमादिपदेनाहिंसास्तेयादयो गृह्यन्ते । एतैर्निवृत्तिप्रधानैः साधनैः शुद्धमुद्दीपितमन्तःकरणं येषां ते तथा । व्यत्यये हेतुमाह । ज्योतिष्परत्वादिति । यत्स्वमहिमप्रतिष्ठितं दीप्यते तत्परं ज्योतिरिति संबन्धः ।

दीप्यमानत्वं विवृणोति । येनेति । मन्त्रान्तरमवतारयति । किंचेति । इतश्च विद्यास्तुत्यर्थेति यावत् । किमाहेत्यपेक्षायां द्वितीयं मन्त्रमादत्ते । उद्वयमिति । तं व्याकरो-

१ ग. ट. बीजभू° । २ क. ख. ग. ङ. च. ञ. ट. ड. ढ. ण. °धोन शु° ३ घ. ङ. च. ठ. ण. °णादिवि । ४ क. °वसौम्ये° । ५ क. °मितिश्रु° । ६ क. °तिनैचस° । ७ क. °श्यन्ति त° । ८ क. ट. °त्यमस्यदे° । ९ क. °हिम्नि प्र° । १० क. °तिष्ठद्दीप्य° । ग. ट. °तिष्ठं दी° । ११ ख. ञ. णं. °तीयम°

तिः पश्यन्त उत्तर ँ स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥ ७ ॥ इति तृतीयाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥ मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं

स्तादिति शेषः । तमसो वाऽपनेतृ यज्ज्योतिरुत्तरमादित्यस्थं परिपश्यन्तो वयमुदगन्मेति व्यवहितेन संबन्धः । तज्ज्योतिः स्वः स्वमात्मीयमस्मद्धृदि स्थितम् । आदित्यस्थं च तदेकं ज्योतिः । यदुत्तरमुत्कृष्टतरमूर्ध्वतरं वाऽपरं ज्योतिरपेक्ष्य पश्यन्त उदगन्म वयम् । कमुदगन्मेत्याह । देवं द्योतनवन्तं देवत्रा देवेषु सर्वेषु सूर्यं रसानां रश्मीनां प्राणानां च जगत ईरणात्सूर्यस्तमुदगन्म गतवन्तो ज्योतिरुत्तमं सर्वज्योतिर्भ्य उत्कृष्टतमम् । अहो प्राप्ता वयमित्यर्थः । इदं तज्ज्योतिर्यदृग्भ्यां स्तुतं यद्यजुस्त्रयेण प्रकाशितम् । द्विरभ्यासो यज्ञकल्पनापरिसमाप्त्यर्थः ॥ ७ ॥ इति तृतीयाध्यायस्य सप्तमदशः खण्डः ॥ १७ ॥

मनोमय ईश्वर उक्त आकाशात्मेति च ब्रह्मणो गुणैकदेशत्वेन । अथेदानीं मनआकाशयोः समस्तब्रह्मदृष्टिविधानार्थ आरम्भो मनो ब्रह्मे-

ति । तमस इत्यादिना । तस्यैव ज्योतिषः प्रमाने ज्योतिर्नान्यदस्तीत्यर्थः । देवत्वेन प्रत्यगात्मत्वमाह । स्वैरिति । तयोरेकत्वं स यश्चायमित्यादिषु श्रुत्यन्तरसिद्धं दर्शयति । आदित्यस्थमिति । तत्पदार्थं त्वंपदार्थं चोक्त्वा तयोरैक्यमुक्तमिदानीमेकीभूतं ज्योतिर्विशिनष्टि । यदुत्तरमिति । एकत्वधीफलं कथयति । पश्यन्त इति । फलमेव प्रश्नपूर्वकं विवृणोति । कमित्यादिना । फलविषयं स्वानुभवं दर्शयति । अहो इति । मन्त्राणां मन्त्रयोश्चैकवाक्यत्वमुपसंहरति । इदं तदिति ॥ ७ ॥ इति तृतीयाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

ननु यज्ञविज्ञानेन वक्ष्यमाणविज्ञानस्य न संगतिरस्तीति कथं पौर्वापर्यमित्याशङ्क्यानन्तरखण्डस्य व्यवहितेन संबन्धमाह । मनोमय इति । इति चेश्वर उक्त इति पूर्वेण संबन्धः । तत्र ब्रह्मणो गुणयोरेकदेशत्वेन मन आकाशश्चोक्त इत्याह । ब्रह्मण इति । यथोक्तगुणकब्रह्मदृष्ट्या समर्थस्य तयोरेव संपूर्णब्रह्मदृष्टिकथनार्थमुत्तरग्रन्थमवतारयति । अथेति । एवमुभयमुपदिष्टं भवतीति संबन्धः । तदेवोभयं विभजते-

१ ख. भ. ण. °यैद्वाभ्यामृग्भ्यां । २ घ. ठ. °तं प्रकाशितं य° । ३ घ. च. ठ. ड. ण. °नास° । ४ क. ग. ट. स्त इति । ५ ग. ट. °कर्षी° । ६ क. ख. ग. ञ. ट. °दृष्टयस° । ७ क. °त्तरं ग्र° ।

भवत्यध्यात्मं चाधिदैवतं च ॥ १ ॥ तदेतच्च-
तुष्पाद्ब्रह्म वाक्पादः प्राणः पादश्चक्षुः पादः
श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पा-
दो वायुः पाद आदित्यः पादो दिशः पाद
इत्युभयमेवाऽऽदिष्टं भवत्यध्यात्मं चैवाधिदैवतं
च ॥ २ ॥ वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्नि

---

त्यादि । मनो मनुतेऽनेनेत्यन्तःकरणं तद्ब्रह्म परमित्युपासीतेति । ए-तदात्मविषयं दर्शनमध्यात्मम् । अथाधिदैवतं देवताविषयमिदं वक्ष्यामः । आकाशो ब्रह्मेत्युपासीत । एवमुभयमध्यात्ममधिदैवतं चोभयं ब्रह्मदृष्टि-विषयमादिष्टमुपदिष्टं भवति । आकाशमनसोः सूक्ष्मत्वात् । मनसोप-लभ्यत्वाच्च ब्रह्मणो योग्यं मनो ब्रह्मदृष्टेः । आकाशश्च सर्वगतत्वात्सूक्ष्म-त्वादुपाधिहीनत्वाच्च ॥ १ ॥

तदेतन्मन आख्यं चतुष्पाद्ब्रह्म । चत्वारः पादा अस्येति । कथं चतुष्पात्त्वं मनसो ब्रह्मण इत्याह । वाक्प्राणश्चक्षुः श्रोत्रमित्येते पादा इत्यध्यात्मम् ।

अथाधिदैवतमाकाशस्य ब्रह्मणोऽग्निर्वायुरादित्यो दिश इत्येते । एव-मुभयमेव चतुष्पाद्ब्रह्माऽऽदिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ॥ २ ॥

तत्र वागेव मनसो ब्रह्मणश्चतुर्थः पाद इतरपादत्रयापेक्षया । वाचा हि पा-

---

अध्यात्ममिति । कथं मनोदृष्टिविषयत्वेनाध्यात्मं मनो ब्रह्मेत्युपासनं विधित्स्यते त-त्राऽऽह । मनसेति । तथाऽपि कथं ब्रह्मदृष्टेराकाशं विषयीभवति न हि तेनोपल-भ्यते ब्रह्मेत्याशङ्क्याऽऽह । आकाशश्चेति । ब्रह्मदृष्टेर्योग्यमिति पूर्वेण संबन्धः ॥१॥ अध्यात्ममधिदैवतं च विहितस्योपासनस्याङ्गानुचिन्तनं दर्शयति । तदेतदिति । म-नसश्चतुष्पात्त्वं प्रश्नपूर्वकं व्युत्पादयति । कथमित्यादिना ।

आधिदैविकस्याऽऽकाशस्य चतुष्पात्त्वं प्रकटयति । अथेत्यादिना । मनआका-शयोरुक्तं चतुष्पात्त्वं निगमयति । एवमिति ॥ २ ॥ आध्यात्मिकान्पादान्प्रपञ्चयति । तत्रेति । पादत्वं वाचो व्युत्पादयति । वाचाहीति । यथा गवादि गन्तव्यं पादेनैव प्राप्नोति देवदत्तोऽपि वाचैव पादेन वक्तव्यं विषयं प्रतिलभते । तेन तस्या

---

१ ञ. ड. °गत्वा°। २ क. छ. ञ. ण. °रुक्तच°।

ना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद॥३॥

प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥

---

[1]देनेव गवादि[2] वक्त[3]व्यविषयं प्रति[4] तिष्ठति। अतो मनसः पाद इव वाक्। तथा प्राणो घ्राण[5]ः पादः। तेनापि गन्धविषयं प्रति च[6] क्राम[7]ति। तथा चक्षुः पादः श्रोत्रं पाद इत्येवमध्यात्मं चतुष्पात्त्वं मनसो ब्रह्मणः। अथाधिदैवतम-ग्निर्वाय्वादित्य[8]दिश आकाशस्य ब्रह्मण उदर इव गोः पादा विलग्ना उपलभ्यन्ते। तेन तस्याऽऽकाशस्याग्न्यादयः पादा उच्यन्ते। एवमुभयमध्यात्मं[9] चैवाधिदैवतं[10] चतुष्पादादिष्टं भवति। तत्र वागेव मनसो ब्रह्मणश्चतुर्थः पादः। सोऽग्निनाऽधिदैवतेन ज्योतिषा भाति च दीप्यते तपति च संतापं[11] चौष्ण्यं करोति।

अथवा तैलघृताद्याग्नेयाशनेनेद्धा वाग्भाति च तपति च वद[12][13]नायोत्साहवती स्यादित्यर्थः। विद्वत्फलं भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन[14] य एवं यथोक्तं वेद ॥ ३ ॥

तथा प्राण एव ब्रह्मणश्चतुर्थः पादः। स वायुना गन्धा[15]य भाति च तपति

---

युक्तं पादत्वमित्यर्थः। प्राणस्य वाच इव पादत्वं दर्शयति। तेनापीति। आधिदैविकान्पादान्विवृणोति। अथेति। यथा गोरुदरे पादा लग्ना लक्ष्यन्ते तथाऽऽकाशस्योदर इवाग्न्यादयो लग्ना दृश्यन्ते। तस्मात्तस्य ते पादा इव भवन्तीत्यर्थः। द्विविधपादविवरणमुपसंहरति। एवमिति। संप्रत्याध्यात्मिकपादानामाधिदैविकपादैरधिष्ठेयतया संबन्धोऽनुचिन्तनीय इति दर्शयितुमुपक्रमते। तत्रेति। सोऽग्निनेत्यादेरर्थान्तरमाह। अथवेति। कीर्तियशसोः प्रत्यक्षत्वपरोक्षत्वाभ्यां भेदः ॥ ३ ॥

---

१ ग. घ. ट. ठ. ड. °देनैव। २ ख. ञ. ण. °दिर्वक्त° क. ठ. °दिवद्वक्त°। ३ च. ठ. °क्तव्य वि°। ४ ङ. ड. ढ. °ति प्रतितिं°। ५ ङ. ठ. घ्राणं पा°। ६ घ. च. ढ. चङ्क्रामिति। ७ ख. ञ. ठ. °मतीति। ८ ङ. °ग्निर्वायुरादित्यो दि°। ९ ख. ञ. ढ. °त्मं चाधि°। १० ख. ङ. च. ञ. ढ. °तं च च°। ११ ख. घ. ञ. पं चोष्णं क°। १२ घ वचना°। १३ च. ठ. ड. ढ. °दनोत्सा°। १४ ण. सेनेति य°। १५ क. ग. ट °न्धात्मना भा°।

चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥ श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद॥६॥इति तृतीयाध्यायस्याष्टादशः खण्डः॥१८॥ आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् । तत्सदासीत्तत्समभवत्तदाण्डं

---

च । तथा चक्षुरादित्येन रूपग्रहणाय श्रोत्रं दिग्भिः शब्दग्रहणाय । विद्याफलं समानम् । सर्वत्र ब्रह्मसंपत्तिरदृष्टं फलं य एवं वेद । द्विरुक्तिर्दर्शनसमाप्त्यर्था ॥ ४॥ ५ ॥ ६ ॥ इति तृतीयाध्यायस्याष्टादशः खण्डः ॥ १८ ॥

आदित्यो ब्रह्मणः पाद उक्त इति तस्मिन्सकलब्रह्मदृष्ट्यर्थमिदमारभ्यते । आदित्यो ब्रह्मेत्यादेश उपदेशस्तस्योपव्याख्यानं क्रियते स्तुत्यर्थम् । असदव्याकृतनामरूपमिदं जगदशेषमग्रे प्रागवस्थायामुत्पत्तेरासीन्न त्वसदेव । कथमसतः सज्जायेतेत्यसत्कार्यत्वस्य प्रतिषेधात् । नन्विहासदेवेति विधानाद्विकल्पः स्यात् ।

न क्रियास्विव वस्तुनि विकल्पानुपपत्तेः । कथं तर्हीदमसदेवेति ।

---

सर्वत्रेत्युभयतः संबध्यते ॥४॥५॥६॥ इति तृतीयाध्यायस्याष्टादशःखण्डः ॥१८॥

खण्डान्तरस्य संगतिमाह । आदित्य इति । तस्येत्यादित्यो गृह्यते । अनभिव्यक्तनामरूपत्वाभिप्रायेणासच्छब्दो गौणो व्याख्यातस्तत्रैवकारावष्टम्भेन शङ्कते । नन्विहेति । कथमसतः सज्जायेतेत्यसत्कारणत्वस्य षष्ठे निराकरिष्यमाणत्वात्तत्र सत्कारणं भवतु प्रकृते तु सावधारणादसच्छब्दादसदेव कारणं विवक्षितमित्युदितानुदितहोमवद्विकल्प इत्यर्थः । क्रियायाः कर्तृतन्त्रत्वात्तदिच्छया तत्र विकल्पाद्वस्तुनस्तु सिद्धस्य तदिच्छाननुविधायित्वान्न विकल्पः संभवति । न हि स्थाणुरेव कस्यचिदपेक्षया पुरुषो भवतीति परिहरति । न क्रियास्विवेति । विकल्पासंभवे वाक्यस्य गतिर्वक्तव्येति पू-

---

१ ङ. च. ढ. °दग्रे ।

## निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निर-

नन्ववोचामाव्याकृतनामरूपत्वादसदिवासदिति । नन्वेवशब्दोऽवधारणार्थः । सत्यमेवं न तु सत्त्वाभावमवधारयति । किं तर्हि नामरूपव्याकृतविषये सच्छब्दप्रयोगो दृष्टः । तच्च नामरूपव्याकरणमादित्यायत्तं प्रायशो जगतः । तदभावे ह्यन्धं तम इदं न प्रज्ञायेत । किंच नेत्यतस्तत्स्तुतिपरे वाक्ये सदपीदं प्रागुत्पत्तेर्जगदसदेवेत्यादित्यं स्तौति ब्रह्मदृष्ट्यर्हत्वाय । आदित्यनिमित्तो हि लोके सदिति व्यवहारः । यथाऽसदेवेदं राज्ञः कुलं सर्वगुणसंपन्ने पूर्णवर्मणि राजन्यसतीति तद्वत् । न च सत्त्वमसत्त्वं[2] [3]वेह जगतः प्रतिपिपादयिषितमादित्यो ब्रह्मेत्यादेशपरत्वात् ।

उपसंहरिष्यत्यन्त आदित्यं ब्रह्मेत्युपास्त इति । तत्सदासीत्तदसच्छब्दवाच्यं प्रागुत्पत्तेः । स्तिमितमनिस्पन्दमसदिव सत्कार्याभिमुखं ईषदुपजातप्रवृत्ति सदासीत्त[4]तो लब्धपरिस्पन्दं तत्समभवदल्पतरनामरूपव्याकरणेनाङ्कुरीभूतमिव बीजम् । ततोऽपि क्रमेण स्थूलीभवत्त-

च्छति । कथमिति । असच्छब्दस्य वा गतिरवधारणस्य वा पृच्छ्यते तत्राऽऽद्यं प्रत्याह । नन्विति । द्वितीयं शङ्कते । नन्वेवशब्द इति । तस्य का गतिरिति शेषः पूर्वकालीनसत्त्वाभिधायकासीच्छब्दस्य वाक्यशेषे श्रवणान्नोपक्रमे च सत्त्वाभावावधारणं विवक्षितं किन्त्वभिव्यक्त्यभावावधारणमादित्यस्तुत्यर्थमिति समाधत्ते । सत्यमेवमिति । क्व पुनरियमादित्यस्तुतिरुपयुज्यते तत्राऽऽह । ब्रह्मदृष्टीति । जगतो नामरूपव्याकरणमादित्यायत्तमिति तदुपपादयति । आदित्येति । तथाऽपि कथमादित्यस्तुतिरित्याशङ्क्य दृष्टान्तेन दर्शयति । यथेति । किंचोपक्रमोपसंहारैकरूप्येणाऽऽदित्ये ब्रह्मदृष्टिविधिपरमिदं वाक्यं न तस्य कारणासत्त्वे तात्पर्यं कल्पयितुं शक्यमनन्यथासिद्धकल्पकाभावादित्याह । नचेति ।

तत्परत्वं कथमवगतमित्याशङ्क्योपसंहारस्योपक्रमानुसारित्वादित्याह । उपसंहरिष्यतीति । कथं तस्यासच्छब्दवाच्यत्वं तदाह । स्तिमितमिति । सत्त्वं तर्हि कथमिति तदाह । कार्येति । बीजस्योच्छूनतावत्कारणस्य सिसृक्षावस्थां दर्शयति । ईषदिति । लब्धपरिस्पन्दं प्राप्तपरिणामं सद्भूतसूक्ष्माकारेणाभवदित्यर्थः । सूक्ष्मभूतोत्पत्त्यनन्तरं स्थूलभूतोत्पत्तिमाह । ततोऽपीति । भूतसूक्ष्माकारप्राप्तेरनन्तरं पञ्चीकरणप्रक्रिययाऽन्योन्यावयवानुप्रवेशेन स्थूलभूतावस्थमासीदित्यर्थः । स्थूलेभ्यश्च भूतेभ्योऽ-

१ च. छ. ढ. राजकु॰ । २ क. च. ट. ठ. ड. ढ. ॰त्त्वं चेहे॰ । ३ ञ. ॰वेदं ज॰ । ४ क. ख. ञ ण. ॰तोऽपि ल॰ ।

भिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥ तद्यद्रजत सेयं पृथिवी यत्सुवर्ण सा द्यौर्यज्जरायु ते पर्वता यदुल्ब समेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदक स समुद्रः ॥ २ ॥ अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्त्स-

दद्भ्य आण्डं समवर्तत संवृत्तम्। आण्डमिति दैर्घ्यं छान्दसम्। तदण्डं संवत्सरस्य कालस्य प्रसिद्धस्य मात्रां परिमाणमभिन्नस्वरूपमेवाशयत स्थितं बभूव। तत्ततः संवत्सरपरिमाणात्कालादूर्ध्वं निरभिद्यत निर्भिन्नं वयसामिवाण्डम्। तस्य निर्भिन्नस्याण्डस्य कपाले द्वे रजतं च सुवर्णं चाभवतां संवृत्ते ॥ १ ॥

तत्तयोः कपालयोर्यद्रजतं कपालमासीत्सेयं पृथिवी पृथिव्युपलक्षितमधोऽण्डकपालमित्यर्थः। यत्सुवर्णं कपालं सा द्यौर्द्युलोकोपलक्षितमूर्ध्वं कपालमित्यर्थः। यज्जरायु गर्भपरिवेष्टनं स्थूलमण्डस्य द्विशकलीभावकाल आसीत्ते पर्वता बभूवुः। यदुल्बं यत्सूक्ष्मं गर्भपरिवेष्टनं तत्सह मेघैः समेघो नीहारोऽवश्यायो बभूवेत्यर्थः। या गर्भस्य जातस्य देहे धमनयः शिरास्ता नद्यो बभूवुः। यत्तस्य वस्तौ भवं वास्तेयमुदकं स समुद्रः ॥ २ ॥

अथ यत्तदजायत गर्भरूपं तस्मिन्नण्डे सोऽसावादित्यस्तमादित्यं जायमानं घोषाः शब्दा उलूलव उरूरवो विस्तीर्णरवा उदतिष्ठन्नुत्थितवन्त ईश्वरस्येवेह प्रथमपुत्रजन्मनि सर्वाणि च स्थावरजङ्गमानि भूतानि सर्वे च तेषां भूतानां कामाः काम्यन्त इति विषयाः स्त्रीवस्त्रान्नादयः। यस्मादादित्यजन्मनिमित्ता भूतकामोत्पत्तिस्तस्मादद्यत्वेऽपि तस्याऽऽदित्यस्योदयं प्रति प्रत्यायनं प्रत्यस्तंगमनं च प्रत्यथवा पुनः

ण्डनिर्वृत्तिं प्रतिजानीते। अद्भ्य इति। अप्साहितेभ्यो भूतेभ्य इत्यर्थः ॥ १ ॥

अवश्यायशब्देन हिममुच्यते ॥ २ ॥

उलूलव इत्युत्सवकालीनाः शब्दविशेषा देशविशेषे प्रसिद्धाः स्त्रीवस्त्रान्नादय उद-

१ क. ञ. °भवे°। २ घ. च. ठ. °मानमनु घो°। ३ ख. ञ. °द्यापि। ४ च. °स्तम°। ५ ठ. ढ. ड. °नं प्र°।

र्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्यो-
दयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्ति-
ष्ठन्ति सर्वाणि च भूतानि सर्वे[1] च कामाः ॥३॥
स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्यो-
शो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप
च निम्रेडेरन्निम्रेडेरन् ॥ ४ ॥ इति तृतीयाध्या-
यस्य एकोनविंशः खण्डः ॥ १९ ॥ इति च्छा-
न्दोग्योपनिषद्ब्राह्मणे तृतीयोऽध्यायः समाप्तः ॥३॥

---

पुनः[3]प्रत्यागमनं प्रत्यायनं तत्प्रति तन्निमित्तीकृत्येत्यर्थः। सर्वाणि च भूतानि सर्वे च कामा घोषा उलूलवश्चानुतिष्ठन्ति। प्रसिद्धं ह्येतदुदयादौ[4] सवितुः॥ ३॥

स यः कश्चिदेतमेवं यथोक्तमहिमानं विद्वान्सन्नादित्यं ब्रह्मेत्युपास्ते स तद्भावं प्रतिपद्यत इत्यर्थः। किंच दृष्टं फलमभ्याशः[5] क्षिप्रं तद्विदो यदिति क्रियाविशेषणमेनमेवंविदं साधवः शोभना घोषाः। साधुत्वं घोषादीनां यदुपभोगे पापानुबन्धाभावः। आ च गच्छेयुरागच्छेयुश्चोप च निम्रेडेरन्नुपनिम्रेडेरंश्च न केवलमागमनमात्रं घोषाणामुपसुखयेयुश्चोपसुखं च कुर्युरित्यर्थः। द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थ आदरार्थश्च ॥४॥ इति तृतीयाध्यायस्य एकोनविंशः खण्डः ॥ १९ ॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छंकरभगवतः कृतौ छान्दोग्योपनिषद्विवरणे तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

---

तिष्ठन्तीति पूर्वेणसंबन्धः। किमत्र प्रमाणमित्याशङ्क्याऽऽह। प्रसिद्धं हीति। एतदिति भूताद्युत्थानम् ॥ ३ ॥

अदृष्टफलमाहत्योक्त्वा[6] दृष्टफलमाचष्टे[7]। किंचेति। तद्विदो दृष्टफलमिति संबन्धः। क्रियाविशेषणमिति। एवंविदं साधवो घोषा आगच्छेयुरिति यत्तत्क्षिप्रमप्रतिबन्धेनैवेत्यर्थः। आदित्ये ब्रह्मदृष्टिरादरस्य विषयः ॥ ४ ॥ इति तृतीयाध्यायस्य एकोनविंशः खण्डः॥ १९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां तृतीयोऽध्यायः समाप्तः॥ ३ ॥

---

१ क. ग. घ. ङ. ज. झ. ट. ठ. °र्वे चैव का°। २ क. घ. °भ्यासो ह। ३ घ. ङ. ढ. पुनराग°। ४ ग. घ. च. ट. °याद्रौ स°। ५ क. ङ. ञ. ठ. ढ. °भ्यासः क्षि°। ६ क. ख. ञ. ट. °मात्दत्यो°। ७ ख. ग. छ. ट. ण. दृष्टं फ°।

**॥ ॐ ॥ जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मापयांचक्रे सर्वत एव मेऽत्स्यन्तीति ॥ १ ॥**

वायुप्राणयोर्ब्रह्मणः पाददृष्ट्यध्यासः पुरस्ताद्वर्णितः। अथेदानीं तयोः साक्षाद्ब्रह्मत्वेनोपास्यत्वायोत्तरमारभ्यते। सुखावबोधार्थाऽऽख्यायिका विद्यादानग्रहणविधिप्रदर्शनार्था च। श्रद्धान्नदानानुद्धतत्वादीनां च विद्याप्राप्तिसाधनत्वं प्रदर्शयत आख्यायिकया। जानश्रुतिर्जनश्रुतस्यापत्यम्। ह ऐतिह्यार्थः। पुत्रस्य पौत्रः पौत्रायणः स एव श्रद्धादेयः श्रद्धापुरःसरमेव ब्राह्मणादिभ्यो देयमस्येति श्रद्धादेयः। बहुदायी प्रभूतं दातुं शीलमस्येति बहुदायी। बहुपाक्यो बहु पक्तव्यमहन्यहनि गृहे यस्यासौ बहुपाक्यः। भोजनार्थिभ्यो बह्वस्य गृहेऽन्नं पच्यत इत्यर्थः। एवं गुणसंपन्नोऽसौ जानश्रुतिः पौत्रायणो विशिष्टे देशे काले च कस्मिंश्चिदास बभूव। स ह सर्वतः सर्वासु दिक्षु ग्रामेषु नगरेषु चाऽऽवसथानेत्य वसन्ति येष्वित्यावसथास्तान्मापयांचक्रे कारितवानित्यर्थः। सर्वत एव मे ममान्नं तेष्वावसथेषु वसन्तोऽत्स्यन्ति भोक्ष्यन्त इत्येवमभिप्रायः ॥ १ ॥

॥ ॐ ॥ आदित्यस्य सूत्रावच्छेदभेदत्वात्तदुपासनानन्तरं सूत्रोपासनमुपन्यस्यते। नन्वध्यात्ममधिदैवतं च वायुप्राणयोः सूत्रात्मभूतयोरुपासनं पूर्वाध्यायेऽपि व्याख्यातं तथा च कोऽत्र विशेषो येन तदुपासनं पुनरारभ्यतेऽत आह। **वायुप्राणयोरिति**। साक्षात्पादकल्पनं विनेति यावत्। ब्रह्मत्वेन ब्रह्मकार्यरूपेणेत्यर्थः। **विद्येति**। धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा। तत्र विद्या न वक्तव्या शुभं बीजमिवोषर इतिस्मृतिमनुसंधाय पुष्कलधनमादाय रैक्वो राज्ञे विद्यां प्रादाज्जानश्रुतिश्च शास्त्रार्थं ज्ञात्वा पुष्कलधनं दत्त्वैव श्रद्धादिसंपन्नस्ततो विद्यामाददे। तथाऽन्योऽपि विद्याया दाता ग्रहीता वा स्यादिति तद्दानग्रहणयोर्विधिप्रदर्शनार्था चाऽऽख्यायिकेत्यर्थः। ननु षट्शतानि गवामित्यादिदर्शनाद्धनदानमेव विद्याग्रहणे साधनमिह प्रतीयते न तु श्रद्धादीत्याशङ्क्याऽऽह। **श्रद्धेति**। आदिपदेन तात्पर्यप्रणिपातादयो गृह्यन्ते। आख्यायिकया तद्ध ह पुनरेवेत्यादिलक्षणयेति यावत्। जनश्रुतस्य पुत्रो यस्तस्य पौत्रः पौत्रायणः स च प्रकृतो जानश्रुतिरेवेत्याह। **पुत्रस्येति**। श्रद्धया देयस्याल्पत्वशङ्कां वारयति। **बहुदायीति**।

बहुपाकस्य फलमाह। **भोजनेति**। उक्तेस्त्र राज्ञो वर्तमानत्वाभावादसत्त्वमाशङ्क्योक्तमेवमिति। स्वसमीपं प्राप्तेभ्य एवार्थिभ्योऽन्नावन्नं ददातीत्याशङ्क्याऽऽह। **सहेति** ॥ १ ॥

१ घ. च. ठ. ड. ण. ह इत्यैति°। २ ख. छ ञ. ण. °णयोरु°। ३ ख. °क्कलं ध°। ४ ग. ट. °नमे°। ५ क. ख. ञ. ण. °ल्पत्वमा°। ६ क. °क्त्रा°। ७ ग. ट. °मीपप्रा°।

**अथ ह हꣳसा निशायामतिपेतुस्तद्धैवꣳ हꣳसो हꣳसमभ्युवाद हो होऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ॥२॥**

तत्रैवं सति राजनि तस्मिन्घर्मकाले हर्म्यतलस्थेऽथ ह हंसा निशायां रात्रावतिपेतुः। ऋषयो देवता वा राज्ञोऽन्नदानगुणैस्तोषिताः सन्तो हंसरूपा भूत्वा राज्ञो दर्शनगोचरे[1]ऽतिपेतुः पतितवन्तः। तत्तस्मिन्काले तेषां पततां हंसानामेकः पृष्ठतः पतन्नग्रतः पतन्तं हंसमभ्युवादाभ्युक्तवान् हो होऽयीति भो भो इति संबोध्य भल्लाक्ष भल्लाक्षेत्यादरं दर्शयन्यथा पश्य पश्याऽऽश्चर्यमिति तद्वत्। भल्लाक्षेति मन्ददृष्टित्वं सूचयन्नाह।

अथवा सम्यग्ब्रह्मदर्शनाभिमानवत्त्वात्तस्यासकृदुपालब्धस्तेन पीड्यमानोऽमर्षितया तत्सूचयति भल्लाक्षेति। जानश्रुतेः पौत्रायणस्य समं तुल्यं दिवा द्युलोकेन ज्योतिः प्रभास्वरमन्नदानादिजनितप्रभावजमाततं व्याप्तं द्युलोकस्पृगित्यर्थः। दिवाऽह्ना वा समं[2] ज्योतिरित्येतत्। तन्मा प्रसाङ्क्षीः सञ्जनं सक्तिं तेन ज्योतिषा संबन्धं मा कार्षीरित्यर्थः। तत्प्रसञ्जनेन तज्ज्योतिस्त्वा त्वां मा प्रधाक्षीर्मा दहत्वित्यर्थः। पुरुषव्यत्ययेन मा प्रधाक्षीदिति ॥ २ ॥

विशिष्टान्नदानफलं दर्शयितुमारभते। तत्रेति। वाक्यार्थं दर्शयति। ऋषय इति। संबोधनाभ्यासस्य विषयमाह। आदरं दर्शयन्निति। तदेव दृष्टान्तेन स्पष्टयति। यथेति। भल्लाक्षशब्दार्थमाह। भल्लेति। भल्लाक्षशब्दो भद्राक्षविषयः सन्विरुद्धलक्षणया मन्ददृष्टित्वसूचकः।

भल्लाक्षशब्दस्य विषयान्तरमाह। अथवेति। तस्य पृष्ठगामिनो हंसस्य महात्मा नातिक्रमणीयो विजानतेतिसम्यग्दर्शनाभिमानशालित्वात्तेनाग्रगामी हंसो जानश्रुतिमति विचिक्रमिषुरमर्षितया पीड्यमानः सन्न त्वं धर्मं जानासि ज्ञानाभिमानं तु वहसीत्युपालब्धस्तत्र भल्लाक्षेत्युपालम्भस्वरूपं सूचयतीत्यर्थः। पृष्ठगामी हंसो निन्दापूर्वकमग्रगामिनं हंसं संबोध्य [3]किमूचिवानित्यपेक्षायामाह। जानश्रुतेरिति। मा प्रधाक्षीरिति पाठे कथं मा प्रधाक्षीदित्युच्यते तत्राऽऽह। पुरुषव्यत्ययेनेति। मध्यमपुरुषं प्रथमपुरुषं कृत्वा व्याख्यानमित्यर्थः ॥ २ ॥

१ ख. ग. च. ञ. ट. ठ. ण. 'रे निपे'। २ ङ. च. ढ. ण. 'मं राज्ञो ज्यो'। ३ क. किमुक्तवा'।

**तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्त ँ्स-युग्वानमिव रैक्वमात्थेति यो नु कथ ँ् सयुग्वा रैक्व इति ॥ ३ ॥ यथा कृतायविजितायाधरे-**

तमेवमुक्तवन्तं पर इतरोऽग्रगामी प्रत्युवाचारे[1] निकृष्टोऽयं राजा वराकस्तं कमु एनं सन्तं केन माहात्म्येन युक्तं सन्तमिति कुत्सयत्येनमेवं सबहुमानमेतद्वचनमात्थ ।

रैक्वमिव सयुग्वानं सह *युग्वना गन्त्र्या वर्तत इति सयुग्वा रैक्वः । तमिवाऽऽत्थैनम् । अननुरूपमस्मिन्नयुक्तमीदृशं वक्तुं रैक्व इवेत्यभिप्रायः । इतरश्चाऽऽह । यो नु कथं त्वयोच्यते सयुग्वा रैक्व इत्युक्तवन्तं भल्लाक्ष आह शृणु यथा स रैक्वः ॥ ३ ॥

यथा लोके कृतायः कृतो नामायो द्यूतसमये प्रसिद्धश्चतुरङ्कः स यदा

सन्तमेनं प्राणिमात्रं राजानमधिकृत्य सबहुमानमेतद्वचनमात्थेति कुत्सयतीति संबन्धः । तत्र वैधर्म्यदृष्टान्तमाह । रैक्वमिवेति । युगं वहतीति युग्यो बलीवर्दोऽश्वो वाऽस्यामस्तीति युग्वा शकटी तया सह वर्तत इति सयुग्वा रैक्वः । † वकारो मत्वर्थीयः । त्वं रैक्वं ज्ञानमाहात्म्ययुक्तमधिकृत्य यथा प्रशंसावचनं तथा कर्मिणमेवं राजानमधिकृत्य कथमेवमात्थेत्यर्थः । उक्तं वाक्यार्थं संकलयति[4] । अननुरूपमिति । अस्मिन्वराके राजनि धर्ममात्रनिष्ठे नेदमनुरूपं वचनं रैक्वे पुनर्विज्ञानवति यथोक्तं वचो युक्तमेवेति । इतरः पृष्ठगामी हंसः । यः सयुग्वा रैक्वस्त्वयोच्यते स कथं नु स्यादित्यन्वयः ॥ ३ ॥

स रैक्वो येन प्रकारेण स्यात्तं प्रकारं शृण्विति प्रतिज्ञाय प्रकारमदिदर्शयिषया दृष्टान्तमाह । यथेति । द्यूतस्य समयः संकेतदस्तनुष्ठानकालो येन द्यूतविद्यायामेजति सोऽक्षस्तस्य कश्चिद्भागोऽयशब्दवाच्यस्तेत्र[5] यश्चतुरङ्को भागश्चत्वारोऽङ्काश्चिह्नान्यस्मिन्निति व्युत्पत्तेः[6] कृतनामव्यवहृतेन यदा द्यूते प्रवृत्तानां मध्ये स कोऽपि जयति तदा

* यद्यपि सर्वपुस्तकेषु युग्ययेति पाठो दृश्यते तथाऽपि वकारो मत्वर्थीय इति टीकानुसारेण सयुग्वानमिति मूलानुसारेण च प्रामादिक एवेति प्रतिभाति । अत्र वनोरचेतिसूत्रेण ङीब्रयोरभावस्तु च्छान्दसः अयस्मयादीनि च्छन्दसीति भसंज्ञायां यस्येतिचेत्यल्लोपे यलोपः ।

† वकारपदेन वकारघटितो वनिब्लक्ष्यते ।

१ ग. ट. °रेऽतिनि° । २ च. ण °यः । तमित° । ३ क. ख. ग. छ. ञ. ट. ण. युग्या । अयं पाठः प्रामादिकः । ४ छ. ण. संकल्पयति । ५ ञ. °स्तस्य यश्च । ६ क. °त्पत्तेस्तस्मै स कृ° ख. छ. ण. °त्पत्तेस्तस्मै कृ° ञ. °त्पत्ते स्तस्य कृ° ग. ट. त्पत्तेः स कृ° ।

**याः संयन्त्येवमेन ँ सर्वं तदभिसमैति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ४ ॥**

---

जयति द्यूते प्रवृत्तानां तस्मै विजिताय तदर्थमितरे त्रिद्व्येकाङ्का अधरेया त्रेताद्वापरकलिनामानः संयन्ति संगच्छन्तेऽन्तर्भवन्ति। चतुरङ्के कृताये त्रिद्व्येकाङ्कानां विद्यमानत्वात्तदन्तर्भवन्तीत्यर्थः। यथाऽयं दृष्टान्त एवमेनं रैक्वं कृतायस्थानीयं त्रेताद्याय स्थानीयं सर्वं तदभिसमैत्यन्तर्भवति रैक्वे। किंतद्यत्किंच लोके सर्वाः प्रजाः साधु शोभनं धर्मजातं कुर्वन्ति तत्सर्वं रैक्वस्य धर्मेऽन्तर्भवति। तस्य च फले सर्वप्राणिधर्मफलमन्तर्भवतीत्यर्थः॥

तथाऽन्योऽपि कश्चिद्यस्तद्वेद्यं वेद। किंतद्यद्वेद्यं स रैक्वो वेद। तद्वेद्यमन्योऽपि यो वेद तमपि सर्वप्राणिधर्मजातं तत्फलंच रैक्वमिवाभिसमैतीत्यनुवर्तते। स एवंभूतो मया विद्वानेतदुक्त एवमुक्तो रैक्ववत्स एव कृतायस्थानीयो भवतीत्यभिप्रायः॥ ४ ॥

---

तस्मै कृतनामवते विजितायाधरेयाः संयन्तीति संबन्धः। तदर्थं व्याचष्टे। **तदर्थमिति।** अधरेयान्व्याकरोति। **अधरेया इति।**

तानेव विशिनष्टि। **त्रेतेति।** अक्षस्य यस्मिन्भागे त्रयोऽङ्काः स त्रेता नामायो भवति। यत्र तु द्वावङ्कौ स द्वापरनामकः। यत्रैकोऽङ्कः स कलिसंज्ञ इति विभागः। तादर्थ्येनेतराङ्कानामन्तर्भावमुक्तं व्यक्तीकरोति। **चतुरङ्क इति।** तदन्तर्भवन्ति तस्मिन्कृते त्रेतादयस्तेऽन्तर्भवन्तीति यावत्। महासंख्यायामवान्तरसंख्यान्तर्भावः प्रसिद्ध एवेत्यर्थः। दृष्टान्तमनूद्य दार्ष्टान्तिकमाह। **यथेति।** रैक्वमभिव्याप्य सर्वं समैतीत्यस्यार्थं संक्षिपति। **अन्तर्भवतीति।** रैक्वे सर्वस्यान्तर्भावं प्रश्नपूर्वकं प्रकटयति। **किंतदित्यादिना।** तद्धर्मस्य महत्वादन्येषां च धर्मजातस्याल्पत्वात्तस्यैतरस्मिन्नन्तर्भावः संभवतीत्यर्थः। किंच सर्वेषां प्राणिनां धर्मफलमल्पीयस्त्वान्महत्तरे रैक्वस्य धर्मफलेऽन्तर्भवतीत्याह। **तस्य चेति।** न केवलं रैक्वस्यैतन्माहात्म्यं किंत्वन्यस्यापि ज्ञानवतोऽस्तीति जानश्रुतेरनुग्रहार्थमाह। **तथेति॥ ४ ॥**

---

१ क. ग. घ. झ. ठ. °समेति। २ क. °तादिस्था° ख. ञ. ण. °ताद्वापरादिस्था° घ. °ताद्यस्था°। ३ क. घ. च. ठ. °समेत्य°। ४ ख. ङ. ञ. °न्यो यो। ५ ण. सर्व प्रा°। ६ क. ग. घ. च. ठ. °समेती°। ७ क. ग. ट. °तो रैक्वोऽपि म°। ८ ञ. यत्रैकाङ्कः। ९ क. ख. छ. ण. समेती°।

तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्क इति ॥५॥ यथा कृतायविजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमैति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥ स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय तꣳ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्छेति॥७॥

तदु ह तदेतदीदृशं हंसवाक्यमात्मनः कुत्सारूपमन्यस्य विदुषो रैक्कादेः प्रशंसारूपमुपशुश्राव श्रुतवान्हर्म्यतलस्थो राजा जानश्रुतिः पौत्रायणः। तच्च हंसवाक्यं स्मरन्नेव पौनःपुन्येन रात्रिशेषमतिवाहयामास। ततः स वन्दिभी राजा स्तुतियुक्ताभिर्वाग्भिः प्रतिबोध्यमान उवाच क्षत्तारं संजिहान एव शयनं निद्रां वा परित्यजन्नेव हेऽङ्ग वत्सारे ह सयुग्वानमिव रैक्कमात्थ किं माम्। स एव स्तुत्यर्हो नाहमित्यभिप्रायः। अथवा सयुग्वानं रैक्कमात्थ गत्वा मम तद्दिदृक्षा तदेवशब्दोऽवधारणार्थोऽनर्थको वा वाच्यः। स च क्षत्ता प्रत्युवाच रैक्कानयनकामो राज्ञोऽभिप्रायज्ञो यो नु कथं सयुग्वा रैक्क इति राज्ञैवंचोक्त आनेतुं तच्चिह्नं ज्ञातुमिच्छन्यो नु कथं सयुग्वा रैक्क इत्यवोचत्। स च भल्लाक्षवचनमेवावोचत् ॥ ५ ॥ ६ ॥

तस्य स्मरन्स ह क्षत्ता नगरं ग्रामं वा गत्वाऽन्विष्य रैक्कं नाविदं न व्यज्ञासिषमिति प्रत्येयाय प्रत्यागतवान्। तं होवाच क्षत्तारमरे यत्र ब्राह्मणस्य ब्रह्मविद एकान्तेऽरण्ये नदीपुलिनादौ विविक्ते देशेऽन्वेषणाऽनुमार्गणं भवति तत्तत्रैनं रैक्कमर्छ ऋच्छ गच्छ तत्र मार्गणं कुर्वित्यर्थः ॥७॥

प्रतिपन्नहंसवचनखेदित इतरो राजा रात्रिशेषमतिवाह्य शयनं जहदात्मनः समीपस्थं स्तुतिकर्तारं क्षत्तारमङ्गारे हेत्यादिवाक्यमुक्तवान्। तस्याभिप्रायमाह। स एवेति। कथमिवशब्दो द्वितीये घटते तत्राऽऽह। तदेति। अवधारणस्यापि नोपयोगोऽस्तीति चेत्तत्राऽऽह। अनर्थको वेति। प्रश्नवाक्यं व्याचष्टे। राज्ञेति। यो नु कथमित्यादि पूर्ववद्व्याख्येयम् ॥ ५ ॥ ६ ॥ तस्येति कर्मणि षष्ठी ॥ ७ ॥

१ क. घ. ञ. ठ. समेति। २ ङ. च। ३ ख. ञ. °रण्यन°। ४ ख. घ. च. ञ. ण. °विक्तदे°। ५ क. ख. च. ञ. °छं ग°।

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहꣳ ह्यरा ३ इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ॥ ८ ॥ इति चतुर्थाध्यायस्य प्रथमः खण्डः ॥ १ ॥ तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ हाभ्युवाद ॥ १ ॥ रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवताꣳ शाधि

---

इत्युक्तः क्षत्ताऽन्विष्य तं विजने देशेऽधस्ताच्छकटस्य गन्त्र्याः पामानं[2] खर्जूं[3] कषमाणं कण्डूयमानं दृष्ट्वाऽयं[4] नूनं सयुग्वा रैक्व इत्युप समीप उपविवेश विनयेनोपविष्टवान्। तं च रैक्वं हाभ्युवादोक्तवान्। त्वमसि हे भगवो भगवन्सयुग्वा रैक्व इति। एवं पृष्टोऽहमस्मि ह्यरा २ अर इति हानादर एव प्रतिजज्ञेऽभ्युपगतवान्। स तं विज्ञायाविदं विज्ञातवानस्मीति प्रत्येयाय प्रत्यागत इत्यर्थः ॥८॥ इति चतुर्थाध्यायस्य प्रथमः खण्डः ॥१॥

तत्तत्र ऋषेर्गार्हस्थ्यं प्रत्यभिप्रायं बुद्ध्वा धनार्थितां चो ह एव जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कं कण्ठहारमश्वतरीरथमश्वतरीभ्यां युक्तं रथं तदादाय धनं गृहीत्वा प्रतिचक्रमे रैक्वं प्रति गतवान्। तं च गत्वाऽभ्युवाद हाभ्युक्तवान् ॥ १ ॥

हे रैक्व गवां षट् शतानीमानि तुभ्यं मयाऽऽनीतान्ययं[8] निष्कोऽश्वतरीरथश्चायमेतद्धनमादत्स्व। भगवोऽनुशाधि च मे मामेतां यां च दे-

---

मया हि गार्हस्थ्यं चिकीर्ष्यते तदर्थं च धनमर्थ्यते न चायं तादर्थ्येन किंचिदुपकर्तुमित्याशयेनानादरं विज्ञातवानस्मि यदुक्तलक्षणं रैक्वं तस्य च गार्हस्थ्याभिप्रायं धनार्थित्वं चेति शेषः ॥ ८ ॥ इति चतुर्थाध्यायस्य प्रथमः खण्डः ॥ १ ॥

क्षत्तृवचने श्रुते सतीति सप्तम्यर्थः। धनार्थितां च बुद्ध्वेति पूर्वेण संबन्धः ॥ उह-

---

१ ख. ञ. कर्षमा°। २ क. ग. घ. ङ. च. ट. ठ. ड. ढ. °नं क° ञ. °नं खर्जुं क°। ३ क. ख. ञ. ण. कर्षमा°। ४ ठ. ड °यं स नू°। ५ क. ग. घ. ङ. च. ञ. ट. ठ. ड. ढ. ण. इति समीप उपापवि°। ६ ख. ग. ङ. ञ. ट. कण्ठ्यहा° घ. ङ, ढ. कण्ठ्यं हा°। ७ ण. °नू। स तं। ८ ख. ग. च. ञ. ट. ठ. ङ. ण. °यं च ति°।

यां देवतामुपास्स इति ॥ २ ॥ तमु ह परः-
प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिर-
स्त्विति तदु ह पुनरेव जानश्रुतिः पौत्रायणः

वतां त्वमुपास्से तद्देवतोपदेशेन मामनुशाधीत्यर्थः ॥ २ ॥

तमेवमुक्तवन्तं राजानं प्रत्युवाच परो रैक्कः। अहेत्ययं निपातो वि-निग्रहार्थीयो ऽन्यत्रेह त्वनर्थकः। एवशब्दस्य पृथक्प्रयोगात्। हारेत्वा हारेण युक्तेत्वा गन्त्री सेयं हारेत्वा गोभिः सह तवैवास्तु तवैवं तिष्ठतु न ममापर्याप्तेन कर्मार्थमनेन प्रयोजनमित्यभिप्रायो हे शूद्रेति।

ननु राजाऽसौ क्षत्तृसंबन्धात्स ह क्षत्तारमुवाचेत्युक्तम्। विद्याग्रहणाय च ब्राह्मणसमीपोपगमाच्छूद्रस्य चानधिकारात्कथमिदमननुरूपं रैक्केणोच्यते हे शूद्रेति। तत्राऽऽहुराचार्याः। हंसवचनश्रवणाच्छुगेनमाविवेश। तेनासौ शुचा श्रुत्वा रैक्कस्य महिमानं वा द्रवतीति ऋषिरात्मनः परोक्षज्ञतां दर्शयञ्शूद्रेत्याहेति। शूद्रवद्वा धनेनैवैनं विद्याग्रहणायोपज-

शब्दस्य पूर्ववदत्राप्येवकारोऽर्थः ॥ १ ॥ २ ॥

अत्रापि विनिग्रहार्थत्वसंभवे किमित्यानर्थक्यमित्याशङ्क्य तवैवेत्येवकारादेव विनिग्रहसिद्धिरित्याह। एवशब्दस्येति। गार्हस्थ्यार्थिनस्तव कर्मानुष्ठानार्थमिदं धनं तिष्ठतांदिति चेन्नेत्याह। न ममेति।

शूद्रशब्देन जानश्रुतेः संबोधनमनुचितमिति चोदयति। नन्विति। तस्याशूद्रत्वे हेत्वन्तरमाह। विद्याग्रहणायेति। तस्य श्रुतिद्वारा विद्याधिकारो नास्तीत्यथशूद्राधिकरणे निर्धारितमित्याशयेनाऽऽह। शूद्रस्य चेति। जानश्रुतेः सति क्षत्रियत्वे शूद्रसंबोधनमयोग्यमित्युपसंहरति। कथमिति। न जातिशूद्रो जानश्रुतिः किंतु क्षत्रियोऽस्मिन्गौणः शूद्रशब्द इत्येकीयमतोपन्यासेन परिहरति। तत्रेति। तेन शुगाविष्टत्वेनासौ जानश्रुतिः शुचा हेतुना रैक्कमाद्रवतीति शूद्रः श्रुत्वा वा हंसवाक्यं रैक्कमाद्रवतीति नैमित्तिकं तत्र शूद्रपदमित्यर्थः। तथाऽपि किमिति शूद्रपदेन राजानमृषिः संबोधयतीत्याशङ्क्याऽऽह। ऋषिरिति। उक्तप्रकारद्वयसमाप्ताविति शब्दः। प्रकारान्तरेण जानश्रुतेः शूद्रत्वं गौणं व्युत्पादयति। शूद्रवद्वेति। न च शुश्रूषया वेन

१ ख. ञ. ण. °वैवाव। २ ख. ग. घ. ङ. च. ञ. ट. ठ. ड. ण. °चञ्श्रव°। ३ क. ख. छ. ञ. ण. °तामिति। ४ छ. न शु°।

सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥ त१हाभ्युवाद रैक्वेद१ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥४॥ तस्या ह मुखमुपोद्गृह्णन्नुवाचाऽऽजहारेमाः शू-

गाम नं च शुश्रूषया । न तु जात्यैव शूद्र इति । अपरे पुनराहुरल्पं धनमाहृतमिति रुषैवैनमुक्तवाञ्छूद्रेति ।

लिङ्गं च बह्वाहरण उपादानं धनस्येति । तदु हर्षेमतं ज्ञात्वा पुनरेव जानश्रुतिः पौत्रायणो गवां सहस्रमधिकं जायां चर्षेरभिमतां दुहितरमात्मनस्तदादाय प्रतिचक्रमे क्रान्तवान् ॥ ३ ॥

रैक्वेदं गवां सहस्रमयं निष्कोऽयमश्वतरीरथ इयं जायार्थं मम दुहिताऽऽनीताऽयं च ग्रामो यस्मिन्नास्से तिष्ठसि स च त्वदर्थे मया कल्पितः । तदेतत्सर्वमादायानुशाध्येव मा मां हे भगव इत्युक्तस्तस्या जायार्थमानीताया राज्ञो दुहितुर्हैव मुखं द्वारं विद्याया दाने तीर्थमुपोद्गृह्णञ्जानन्नित्यर्थः । ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः । विद्यया वा विद्यां प्राह तानि तीर्थानि षण्ममेति विद्याया वचनं विज्ञायते हि । एवं जानन्नुपोद्गृह्णन्नुवाचोक्तवान् । आजहाराऽऽहृतवान्भवान्यदिमा गा यच्चान्यद्धनं तत्साध्विति वाक्यशेषः । शूद्रेति पूर्वोक्तानुकृतिमात्रं न तु

शूद्र इति शेषः । मुख्यं शूद्रत्वं क्षत्तृसंबन्धेन व्यावर्तयति । न त्विति । क्षत्रिये जानश्रुतौ शूद्रशब्दप्रवृत्तौ निमित्तान्तरमाह । अपरे पुनरिति ।

तत्र गमकं दर्शयति । लिङ्गं चेति । यद्दृषेर्मतमधिकधनार्थित्वमिति यावत् । अधिकं षट्शतेभ्यः सकाशादितिशेषः ॥ ३ ॥

विद्यादाने तस्या द्वारत्वं तद्दातुश्च वरज्ञानदानतीर्थतां जानन्नुवाचेति संबन्धः । धनदातुर्विद्यादानतीर्थत्वे प्रमाणमाह । ब्रह्मचारीति । तस्या द्वारतां विद्यादाने तद्दातुस्तीर्थतां च जानन्नुवाचेत्युक्तमनुवदति । एवं जानन्निति । किमुक्तमित्यपेक्षायामाह । आजहारेति ।

१ ग. घ. ङ. ट. ठ. ड. ढ. ण. न शु॰ । २ ङ. ध्यात्वा । ३ घ. च. ठ. ङ. ण. मखमिवमुखं । ४ ख. घ. ञ. ण. प्राहैता॰ । ५ क. ॰ते । ए॰ । ६ ख. ग. ञ. ण. ॰न्भगवा॰ । ७ क. ग. ट. ॰क्षत्तसं॰ ।

द्रानेनैव मुखेनाऽऽलापयिष्यथा इति ते हैते रैक्कपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥ ५ ॥ इति चतुर्थाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति

---

कारणान्तरापेक्षया । पूर्ववदनेनैव मुखेन विद्याग्रहणतीर्थेनाऽऽलापयिष्यथा आलापयसीति मां भाणयसीत्यर्थः । ते हैते ग्रामा रैक्कपर्णा नाम विख्याता महावृषेषु देशेषु यत्र येषु ग्रामेषूवासोषितवान्रैक्कस्तानसौ ग्रामानदादस्मै रैक्काय राजा तस्मै राज्ञे धनं दत्तवते ह किलोवाच विद्यां स रैक्कः ॥ ४ ॥ ५ ॥ इति चतुर्थाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

वायुर्वाव संवर्गो वायुर्बाह्यो वावेत्यवधारणार्थः । संवर्गः संवर्जनात्संग्रहणात्संग्रसनाद्वा संवर्गः । वक्ष्यमाणा अग्न्याद्या देवता आत्मभावमापादयतीत्यतः संवर्गः । संवर्जनाख्यो गुणो ध्येयो वायुवत् । कृतायान्तर्भावदृष्टान्तात् । कथं संवर्गत्वं वायोरित्याह । यदा यस्मिन्काले वा अग्निरुद्वायत्युद्वासनं प्राप्नोत्युपशाम्यति तदाऽसावग्निर्वायुमेवाप्येति वायुस्वाभाव्यमपि गच्छति । तथा यदा सूर्योऽस्तमेति वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ।

---

तत्र वैधर्म्यदृष्टान्तमाह । पूर्ववदिति । अल्पधनहरणानिच्छायां कारणापेक्षायां शूद्रेति संबोधनवदित्यर्थः । रैक्केण ग्रामादिकं गृहीत्वा विद्या जानश्रुतये दत्तेत्यस्मान्प्रति श्रुतिर्ज्ञापयति । ते हैत इति । महावृषेषु महापुण्येष्विति यावत् ॥ ४ ॥ ५ ॥ इति चतुर्थाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

कथं विद्यामुक्तवानित्याशङ्क्याधिदैवतं तदुक्तिप्रकारं दर्शयति । वायुरित्यादिना । प्राणो वाव संवर्ग इति वक्ष्यमाणेनापुनरुक्ततायै वायुं व्याचष्टे । वायुर्बाह्य इति । संवर्जनादित्यस्य व्याख्या संग्रहणादिति । संग्रहणपक्षं समर्थयते । वक्ष्यमाणा इति । किमिति संवर्गत्वं वायोरुपदिश्यते तत्र दृष्टान्तश्रुतिं प्रमाणयति । कृतायेति । संग्रसनाद्वेत्युक्तं पक्षमाकाङ्क्षापूर्वकं व्युत्पादयति । कथमित्यादिना ।

---

१ क. °स स त°। २ ञ. °द्वासय°। ३ क. भाषय°। ४ च. °मान्ददावस्मै । ५ ख. घ. ञ. ठ. ण. °नददा°। ६ क. ख. घ. च. ठ. ण. °युर्वाह्यो । ७ ञ. °द्वासय°। ८ ख. ञ. ण. °युस्वभावमधिग°। ९ क. ख. ण. युर्वाह्य ।

**यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥ यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥ अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इति ॥ ३ ॥ तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥**

---

ननु कथं सूर्याचन्द्रमसोः स्वरूपावस्थितयोर्वायावपिगमनम् । नैष दोषः । अस्तमनेऽदर्शनप्राप्तेर्वायुनिमित्तत्वात् । वायुना ह्यस्तं नीयते सूर्यः । चलनस्य वायुकार्यत्वात् । अथवा [1]प्रलये सूर्याचन्द्रमसोः स्वरूपभ्रंशे तेजोरूपयोर्वायावेवापिगमनं स्यात् ॥ १ ॥

तथा यदाऽऽप उच्छुष्यन्त्युच्छोषमाप्नुवन्ति तदा वायुमेवापियन्ति । वायुर्हि यस्मादेवैतानग्न्याद्यान्महाबलान्संवृङ्क्ते । अतो वायुः संवर्गगुण उपास्य इत्यर्थः । इत्यधिदैवतं देवतासु संवर्गदर्शनमुक्तम् ॥ २ ॥

अथानन्तरमध्यात्ममात्मनि संवर्गदर्शनमिदमुच्यते । प्राणो मुख्यो वाव संवर्गः । स पुरुषो यदा यस्मिन्काले स्वपिति प्राणमेव वागप्येति वायुमिवाग्निः प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः प्राणो हि यस्मादेवैतान्वागादीन्सर्वान्संवृङ्क्त इति ॥ ३ ॥

तौ वा एतौ द्वौ संवर्गौ संवर्जनगुणौ वायुरेव देवेषु संवर्गः प्राणः प्राणेषु वागादिषु मुख्यः ॥ ४ ॥

---

सूर्याचन्द्रमसोर्वायावपिगमनमाक्षिपति । नन्विति । आप्रलयात्तयोरधिकारपदे स्थित्यङ्गीकारात्स्वरूपावस्थितत्वं द्रष्टव्यम् । सूर्यादेः स्वरूपावस्थानेऽपि वायावप्ययः संभवतीति समाधत्ते । नैष दोष इति । अस्तमने सति सूर्यादेरदर्शनप्राप्तेर्वाय्वधीनत्वं व्युत्पादयति । वायुना हीति । सूर्यग्रहणं चन्द्रमसोऽप्युपलक्षणम् । गौणस्तर्हि वायावप्ययः सूर्यादेरित्याशङ्क्य पक्षान्तरमाह । अथवेति । संगतिसमये हि संहरति वेत्यर्थः ॥ १ ॥ २ ॥

कथं प्राणस्य संवर्गत्वमित्याशङ्क्याऽऽह । स पुरुष इति । तस्मात्संवर्ग इत्यध्यात्ममिति शेषः ॥ ३ ॥

वायुप्राणावधिदैवताध्यात्मभेदेन संवर्गगुणावुक्तावुपसंहरति । ताविति ॥ ४ ॥

---

१ ग. घ. च. ट. ण. °सूर्यश्चन्द्रश्च । च° । ङ. ड. ढ. सूर्यश्च चन्द्रश्च । च° । २ ख. ञ. प्रलयकाले । ३ ख. ञ. ण. °ग्न्यादीन्म° । ४ ख. छ. ञ. ण. वाय्वप्य° ।

अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥ ५ ॥ स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन्बहुधा वसन्तं यस्मै वा एतदन्नं

अथैतयोः स्तुत्यर्थमियमाख्यायिकाऽऽरभ्यते । हेत्यैतिह्यार्थः । शौनकं च शुनकस्यापत्यं शौनकं कापेयं कपिगोत्रमभिप्रतारिणं च नामतः कक्षसेनस्यापत्यं काक्षसेनिं भोजनायोपविष्टौ परिविष्यमाणौ सूपकारैर्ब्रह्मचारी ब्रह्मविच्छौण्डो बिभिक्षे भिक्षितवान् । ब्रह्मचारिणो ब्रह्मविन्मानितां बुद्ध्वा तं जिज्ञासमानौ तस्मा उ भिक्षां न ददतुर्न दत्तवन्तौ ह किमयं वक्ष्यतीति ॥ ५ ॥

स होवाच ब्रह्मचारी महात्मनश्चतुर इति द्वितीयाबहुवचनम् । देव एकोऽग्न्यादीन्वायुर्वागादीन्प्राणः । कः स प्रजापतिर्जगार ग्रसितवान् । कः स जगारेति प्रश्नमेके । भुवनस्य भवन्त्यस्मिन्भूतानीति भुवनं भूरादिः सर्वो लोकस्तस्य गोपा गोपायिता रक्षिता गोप्तेत्यर्थः । तं कं प्रजापतिं हे कापेय नाभिपश्यन्ति न जानन्ति मर्त्या मरणधर्माणोऽविवेकिनो वा हेऽभिप्रतारिन्बहुधाऽध्यात्माधिदैवताधिभूतप्रकारैर्व-

अथ इत्याद्यनन्तरवाक्यं व्याचष्टे । अथैतयोरिति । ब्रह्मविच्छौण्डो ब्रह्मविदां मध्ये शूरमात्मानं मन्यमान इति यावत् । बुद्ध्वा लिङ्गविशेषेणेति शेषः जिज्ञासमानावित्युक्तमेव व्यनक्ति । किमयमिति ॥ ५ ॥

चतुर इति द्वितीयाबहुवचनदर्शनान्महात्मन इति तादृगेवेत्याह । द्वितीयेति । यद्वा महात्मन इत्यस्य पञ्चम्यादौ चतुर इत्यस्य च समीचीने प्रयोगदर्शनादिह तथा मा भूदिति मत्वाऽऽह । महात्मन इति । अतो हि जगारेति संबन्धः । कः शब्दः प्रजापतिविषयो व्याख्यातः संप्रति पक्षान्तरमाह । कः स इति । यस्ताञ्जगार स कः स्यादिति प्रश्नमेके वदन्तीत्यर्थः ।

१ ख. घ. च. ञ. ठ. ढ. ण. °र्थं मा°। २ ख. ञ. °नार्योप°। ३ ङ. ड. ढ. °ध्द्वा जि°। ४ क. ग. ट. तं विजि°। ५ क. ख. ग. घ. च. ञ. ट. ठ. ण. उ ह भि°। ६ ढ. ण. सर्वलो°। ७ घ. ङ. ठ. ढ. जानते । ८ ङ. ढ. ण. °दैवाधि°। ९ ग. ट. °षः । तं जि°।

तस्मा एतन्न दत्तमिति ॥ ६ ॥ तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायाऽऽत्मा देवानां जनिता प्रजाना ँ हिरण्यद ँ ष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमा-

सन्तम् । यस्मै वा एतदहन्यहन्यन्नमदनायाऽऽह्रियते संस्क्रियते च तस्मै प्रजापतय एतदन्नं न दत्तमिति ॥ ६ ॥

तदु ह ब्रह्मचारिणो वचनं शौनकः कापेयः प्रतिमन्वानो मनसाऽऽलोचयन्ब्रह्मचारिणं प्रत्येयायाऽऽजगाम । गत्वा चाऽऽह यं त्वमवोचो न पश्यन्ति मर्त्या इति तं वयं पश्यामः । कथम् । आत्मा सर्वस्य स्थावरजङ्गमस्य । किंच देवानामग्न्यादीनामात्मनि संहृत्य ग्रसित्वा पुनर्जनितोत्पादयिता वायुरूपेणाधिदैवतमग्न्यादीनाम् । अध्यात्मं च प्राणरूपेण वागादीनां प्रजानां च जनिता ।

अथ वाऽऽत्मा देवानामग्निवागादीनां जनिता प्रजानां स्थावरजङ्गमानाम् । हिरण्यदंष्ट्रोऽमृतदंष्ट्रोऽभग्नदंष्ट्र इति यावत् । बभसो भक्षणशीलः अनसूरिः सूरिर्मेधावी न सूरिरसूरिस्तत्प्रतिषेधोऽनसूरिः सूरिरेवेत्यर्थः । महान्तमतिप्रमाणमप्रमेयमस्य प्रजापतेर्महिमानं विभूतिमाहुर्ब्रह्मविदः । यस्मात्स्वयमन्यैरनद्यमानोऽभक्ष्यमाणो यदनन्नमग्निवागादिदेवतारूपम-

अत्तारं प्राणमात्मानं चैकत्वेन पश्यन्ब्रह्मचारी मह्यं भिक्षां यन्न ददतुर्भवन्तौ तत्तस्मै देवायैव न ददतुरित्यज्ञत्वमेव तयोर्दर्शयन्नाह । यस्मा इति ॥ ६ ॥

दर्शनमेव प्रश्नद्वारा विशदयति । कथमित्यादिना । अधिदैवतमग्न्यादीनां वायुरूपेण जनितेति संबन्धः । तस्याः प्राथमिकं कृत्वा दर्शयति । आत्मनीति । अग्न्यादीन्प्रलयकाले देवः स्वात्मनि वायुरूपेण ग्रसित्वा पुनरुत्पत्त्यवस्थायामुत्पादयितेति योजना । अध्यात्मं वागादीनपि स्वापावस्थायां स्वात्मनि प्राणरूपे संहृत्य पुनः प्रबोधावस्थायां तेषामुत्पादयिता देवः प्राणरूपेणेत्याह । अध्यात्मं चेति ।

देवानामग्न्यादीनां प्रजानां वागादीनां च जनितेत्युक्तं संप्रति व्याख्यान्तरमाह । अथ वेति । अभग्नदंष्ट्रः सर्वसंहर्तुरपि न काचन ग्लानिर्भवतीत्यर्थः । प्रजापतेर्महिम्नोऽतिप्रमाणत्वं प्रकटयति । यस्मादिति । इतिशब्दात्परस्ताद्यच्छब्दस्य संबन्धः ।

१ क. °त्वाऽऽह । २ ख. घ. ञ. ठ. ण. °त्मा स स° । ३ ण. °रस्य ज° । ४ ण. स्य च । किं° । ५ ख. घ. ङ. च. ञ. ढ. जनयिता । ६ क. °षेधेऽन° ।

नो यदन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति ॥ ७ ॥ तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दश कृ-

त्ति भक्षयतीति। वा इति निरर्थकः।[1] वयं हे ब्रह्मचारिन् आ इदमेवं यथोक्तलक्षणं ब्रह्म वयमा उपास्महे। वयमिति व्यवहितेन संबन्धः। अन्ये न वयमिदमुपास्महे किंतर्हि परमेव ब्रह्मोपास्मह इति वर्णयन्ति। दत्तास्मै भिक्षामित्यवोचन्भृत्यान् ॥ ७ ॥

तस्मा उ ह ददुस्ते हि भिक्षाम्। ते वै ये ग्रस्यन्तेऽग्न्यादयो यश्च तेषां ग्रसिता वायुः पञ्चान्ये वागादिभ्यः। तथाऽन्ये तेभ्यः पञ्चाध्यात्मं वागादयः प्राणश्च ते सर्वे दश भवन्ति संख्यया दश सन्तस्तत्कृतं भवति ते चतुरङ्क ऐकाय[2] एवं चत्वारस्त्र्यङ्काय एवं त्रयोऽपरे द्व्यङ्काय एवं

तदर्थश्च यस्मादित्युक्तस्तस्मात्प्रजापतेर्महिमानमतिप्रमाणमाहुरिति पूर्वेण संबन्धः। वै वयमित्यादिभागं पदच्छेदपूर्वकमादाय व्याचष्टे। वयमित्यादिना। क्रियापदेन वयमित्यस्य संबन्धमुक्तमुपपादयति। वयमितीति। ब्रह्मचारिन्निदं वयमासमन्वादुपास्महे ब्रह्मेत्युक्त्वा प्रकारान्तरेण पदच्छेदपूर्वकं व्याख्यानान्तरमाह। अन्ये नेति। शौनकस्याभिप्रवारिणश्च ज्ञानातिशयं दर्शयित्वा यतिश्च ब्रह्मचारी चेत्यादिस्मृतिमनुसृत्याऽऽह। दत्तेति ॥ ७ ॥

आख्यायिकाद्वारा प्रकृतायां संवर्गविद्यायामात्मा देवानामित्यादि गुणजातमुपदिश्य गुणान्तरमुपदेष्टुमनन्तरवाक्यमवतारयति। ते वा इति। तद्व्याचष्टे। ये ग्रस्यन्त इति। त एते वागादिभ्यः सकाशादन्ये पञ्चेति संबन्धः। अधिदैवतमग्न्यादीन्वायुसहितान्पञ्चोक्त्वा तेनैव प्रकारेणाध्यात्ममपि तेभ्यः सकाशादन्ये प्राणसहिता वागादयः पञ्च सन्तीत्याह। तथेति। अवान्तरसंख्याविनिवेशमुक्त्वा तत्रैव महासंख्यानिवेशं दर्शयति। ते सर्वे इति। दशसंख्यासंबन्धात्तेषां संख्ययेति कृतायोपलक्षितं द्यूतं कृतमित्युच्यते। तत्र दशसंख्यावत्त्वस्य वक्तव्यत्वादिति द्रष्टव्यम्।

यदुक्तमग्न्यादयो वागादयश्च दश सन्तस्तत्कृतं भवतीति तदुपपादयति। चतुरङ्क इत्यादिना। एकस्तावदयो द्यूते चतुरङ्को दृश्यते तद्वदग्न्यादयो वागादयश्च ग्रस्यमानाश्चत्वारो भवन्ति। यथा च द्यूते त्रेता नामैकोऽयस्त्र्यङ्को गृह्यते तथाऽग्न्यादयो

१ ख. ञ. °र्थकं। व°। २ ख. ग. ङ. च. ञ. ठ. ढ. ण. एक आय। ३ क. °ख्यान्त°। ४ ख. छ. ण. °वदायो°। ५ ण. °मकाय°।

**तꣳसैषा विराडन्नादी तयेदꣳसर्वं दृष्टꣳसर्वम-**

द्वावन्यावेकाङ्काय । एवमेकोऽन्य इति । एवं दश सन्तस्तत्कृतं भवति । यत एवं तस्मात्सर्वासु दिक्षु दशस्वप्यग्न्याद्या वागाद्यश्च दशसंख्यासामान्यादन्नमेव दशाक्षरा विराड्विराडन्नमिति हि श्रुतिः । अतोऽन्नमेव दशसंख्यत्वात् । तत एव दश कृतं कृतेऽन्तर्भावाच्चतुरायत्वेनेत्यवोचाम । सैषा विराड्दशसंख्या सत्यन्नं चान्नाचन्नादिनी च कृतत्वेन । कृते हि

वागादयश्चैकैकन्यूनास्त्रयस्तथा च तत्र द्वापरनामायो द्व्यङ्को जायते तद्वद्वागादिष्वग्न्यादिषु च द्वौ द्वौ वर्जयित्वा द्वौ द्वौ भवतः । तथा च तत्र कलिसंज्ञायो भवत्येकाङ्को योऽग्न्यादीनां ग्रसिता वायुर्वागादीनां ग्रसिता प्राणश्चैकस्तेभ्यो ग्रस्यमानेभ्योऽन्य इत्येवं ग्रसितृत्वेन ग्रस्यमानत्वेन च दश सन्तस्ते पूर्वोक्तं कृतं भवतीत्यर्थः । द्यूतस्य सर्वान्नात्तृत्वप्रसिद्ध्या दशसंख्यावतां देवानां कृतत्वसंपादनेनात्तृत्वं संपादितम् । इदानीं दशसंख्यावत्त्वेनैव विराट्त्वसंपादनेन तेषामन्नत्वं संपादयति । यत इति । अग्न्यादिषु वागादिषु च मिलितेषु दशसंख्यावत्त्वेऽपि कथमनेन तद्वत्त्वं तथा च कथं संख्यासामान्यं तेषामन्नसंख्यासामान्यसंपादनमित्याशङ्क्याऽऽह । दशाक्षरेति । विराड्दशसंख्यावती प्रसिद्धा सा चान्नमिति श्रूयते तथा च यथोक्तेष्वग्न्यादिषु वागादिषु च समुदितेषु संख्यासामान्याद्विराट्त्वं संपाद्यान्नत्वसंपादनं सुशकमित्याह । अत इति । तेषु कृतत्वेनान्नत्वं संपादितमुपसंहरति । तत एवेति । द्यूतस्यायचतुष्टयविशिष्टत्वेन कृतत्वेन कृतोपलक्षितेन तत्र दशसंख्यायाः सत्त्वात्तत एव संख्यासामान्यादग्न्यादयश्च कृतं भवति ततश्च तेषामत्तृत्वमित्युक्तमित्यर्थः ।

संप्रति प्रकृतेष्वग्न्यादिषु विराट्त्वमन्नत्वमत्तृत्वमिति त्रयमुपसंहरति । सैषेति । विराजो विधेयत्वात्तस्याश्च स्त्रीलिङ्गतया सैषेति विधेयलिङ्गभाजनम् । त एते प्रकृता देवा विराडित्यवगन्तव्या । सा च दशदेवतात्मिका दशसंख्यावती भवत्यन्नमिति देवतानामन्नत्वसिद्धिः । अन्नादीत्यस्य विराजा संबन्धादन्नादिनीति व्याख्यानम् । ततश्च देवतात्मिका विराट्कृतत्वेनान्नादिनीति तदात्मकानामग्न्यादीनामप्यत्तृत्वसिद्धिरित्यर्थः । विराट्त्वेनान्नत्वं कृतत्वेनात्तृत्वं चेति संपत्तिद्वयमग्न्यादौ दर्शितमुपसंहरति । कृते हीति । कृतोपलक्षिते द्यूते दशसंख्याऽन्तर्भूता प्रसिद्धा । सा चाऽग्न्यादौ दर्शिता । तथा च संख्यासामान्याद्द्यूतगतमत्तृत्वमग्न्यादिषु संपाद्यते

१ ख. ञ. °राडिति । विरा° । २ ङ. °ति श्रु° । ३ क. ञ. ङ. संख्यात्वात् । ४ घ. ठ. °कृतान्त° । ५ क. ग. ट. °श्च चतु° । ६ क. ख. ग. घ. ङ. ञ. ट. ठ. ण. °न्नादि° । ७ ख. छ. संज्ञोऽयो । ८ क. छ. ञ. ण. °षु च वा° । ९ क. °ख्यातम् ।

**स्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ८ ॥ इति चतुर्थाध्यायस्य तृतीयः खण्डः ॥ ३॥ सत्यकामो ह जाबालो जबालां**

---

दशसंख्यांऽन्तर्भूताऽतोऽन्नमन्नादिनी च सा । तथा विद्वान्दशदेवतात्मभूतः सन्विराट्त्वेन दशसंख्ययाऽन्नं कृतसंख्ययाऽन्नादी तयाऽन्नान्नादिन्येदं सर्वं जगद्दशदिक्संस्थं दृष्टं कृतसंख्याभूतयोपलब्धम् । एवंविदोऽस्य सर्वं कृतसंख्याभूतस्य दशदिक्संबद्धं दृष्टमुपलब्धं भवति । किंचान्नादश्च भवति य एवं वेद यथोक्तदर्शी । द्विरभ्यास उपासनसमाप्त्यर्थः ॥ ८ ॥ इति चतुर्थाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

सर्वं वागाद्यग्न्यादि चान्नान्नादत्वसंस्तुतं जगदेकीकृत्य षोडशधा प्रविभज्य तस्मिन्ब्रह्मदृष्टिर्विधातव्येत्यारभ्यते श्रद्धातपसोर्ब्रह्मोपासनाङ्गत्वप्रदर्शनायाऽऽख्यायिका । सत्यकामो ह नामतो हशब्द ऐति-

---

तेनेदं दशकमन्नादीत्युच्यते विराड्वेदे दशसंख्यावतीत्युक्तम् । सा चान्नं विराडन्नमित्युक्तत्वात् । ततश्च विराट्संपत्त्या भवति प्रकृतं दशकमन्नमित्यर्थः । सगुणं संवर्गदर्शनमुक्त्वा तत्फलं वक्तुं विद्वत्स्वरूपं संगिरते । **तथेति** । यथाऽग्न्यादीनां विराट्त्वेनान्नत्वं कृतत्वेन चान्नादत्वं तथा वायुमग्न्याद्यात्मकं प्राणं च वागाद्यात्मकमेकीकृत्याऽऽत्मत्वेन विद्वान्दश देवतास्वरूपभूतः सन्दशसंख्यया विराट्त्वेनान्नं कृतशब्दितयुगं तद्वद्दशसंख्यावच्छिन्नतया कृतत्वेनान्नादी भवतीत्यर्थः । फलोक्त्युपयोगित्वेनार्थान्तरमाह । **तयेति** । कृतोपलक्षितद्यूतस्थसंख्यावच्छिन्नत्वेनावस्थितयाऽन्नत्वेनान्नादित्वेन व्यवस्थितया सर्वमिदं जगद्दशसु दिक्षु संस्थितं दृष्टमुपलब्धं भवति न हि देवतादशकं हित्वा जगन्नाम किंचिदस्ति तथा च दृष्टे देवतादशके दृष्टमेव सर्वं जगद्भवेदित्यर्थः । भूमिकामेवं कृत्वा विद्याफलं दर्शयति । **एवंविद इति** । वायुं प्राणमत्तारमात्मत्वेन पश्यतः कृतसंख्यावच्छिन्नतया स्थितस्य दशदेवताभूतस्य सर्वं जगद्दृष्टं भवति । दृष्टदेवतातिरिक्तस्य जगतोऽभावादित्यर्थः । यो यथोक्तदर्शी प्राणो भूत्वा सर्वत्रान्नादश्च भवतीति फलान्तरम् ॥ ८ ॥ इति चतुर्थाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

पूर्वेण संबन्धं दर्शयितुमुत्तरस्य तात्पर्यमाह । **सर्वमिति** । एकीकृत्य कारणरूपेणैक्यमादायेत्यर्थः । तर्हि तस्मिन्ब्रह्मदृष्टिरेव विधीयतां किमित्याख्यायिका प्रणीयते तत्राऽऽह । **श्रद्धातपसोरिति** । ब्रह्मचर्यवासस्योद्देश्यं फलं दर्शयति ।

१ घ. ङ. ठ. ड. ढ. ण. °ख्याविद्यतेऽन्त°। २ घ. ङ. ठ. ड. ढ. °दिक्थं. दृ°। ३ क. ख. ग. घ ङ. च. ञ. ट. ड. ढ. °वं य°। ४ ख. घ. ङ. ञ. ढ. ण. °नार्थमाख्या°। ५ ग. छ. ट. °नाऽऽस्थि°। ६ ख. ञ. सर्वमिदं ज°। ७ ञ. °द्देश्यफ°।

**मातरमामन्त्रयांचक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति ॥ १ ॥ सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति॥२॥**

---

ह्यार्थो जबालाया अपत्यं जाबालो जबालां स्वां मातरमामन्त्रयांचक्र आमन्त्रितवान् । ब्रह्मचर्यं स्वाध्यायग्रहणाय हे भवति विवत्स्याम्याचार्यकुले किंगोत्रोऽहं किमस्य मम गोत्रं सोऽहं किंगोत्रो न्वहमस्मीति॥१॥

एवं पृष्टा जबाला सा हैनं पुत्रमुवाच नाहमेतत्तव गोत्रं वेद हे तात यद्गोत्रस्त्वमसि। कस्मान्न वेत्सीत्युक्ताऽऽह । बहु भर्तृगृहे[1] परिचर्याजातमतिथ्यभ्यागतादि चरन्त्यहं[2] परिचारिणी परिचरन्तीति[3] परिचरणशीलैवाहं[4] परिचरणचित्ततया गोत्रादिस्मरणे मम मनो नाभूत् । यौवने च तत्काले त्वामलभे लब्धवत्यस्मि । तदैव ते पितोपरतः । अतोऽनाथाऽहं साऽहमेतन्न वेद यद्गोत्रस्त्वमसि । जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स त्वं सत्यकाम एवाहं जाबालोऽस्मीत्याचार्याय ब्रुवीथाः । यद्याचार्येण पृष्ट इत्यभिप्रायः ॥ २ ॥

---

**स्वाध्यायेति** । आचार्यो हि माणवकमुपनयते विज्ञातकुलगोत्रमेवेति मन्वानः पृच्छति । **किंगोत्रोऽहमिति** ॥ १ ॥

अतिथ्यभ्यागताद्यधिकृत्य परिचर्याजातं बहु चरन्ती भर्तृगृहे[5] यतोऽहं स्थिता तेन परिचरन्ती सती परिचरणचित्ततया गोत्रादीन्नापृच्छम् । तथा च तत्स्मरणे मनो मम नाऽऽसीदिति । गोत्रादिप्रश्नाभावे हेत्वन्तरमाह । **यौवनेति** । यद्यपि तस्यामवस्थायां लज्जया गोत्रादि नाप्राक्षीस्तथाऽपि कालान्तरे किमिति पितरं न पृष्टवतीत्याशङ्क्याऽऽह । **तदैवेति** । तथाऽपि किमित्यन्यमभिज्ञं नाप्राक्षीरित्याशङ्क्याऽऽह । **अत इति** । प्रथमं लज्जया पितरं प्रति न प्रश्नः पुनश्च तस्योपरतत्वात्पश्चान्न दुःखबाहुल्यादन्यं प्रति प्रश्न इति स्थिते प्रश्नाभावफलमाह । **साऽहमिति** । किं तर्हि तव ज्ञानमस्ति तदाह । **जबाला त्विति** । एवं स्थिते किमाचार्यं प्रति मया वक्तव्यमित्याशङ्क्याऽऽह । **स त्वमिति** । नापृष्टः कस्यचिद्ब्रूयादिति न्यायं सूचयति । **यदीति** ॥ २ ॥

---

१ ङ. °र्तृगेहे । २ घ. ठ. °न्ती प° । ङ. ढ. °न्ती परिचरणचि° । ३ ग. ट. °ति परिचरणचि° । ४ घ. च. ठ. °वाहमतस्तच्चित्त° । ५ ख. ग. छ. ञ. ट. ण. °र्तृगेहे ।

